॥ रामतत्व-प्रकाश छापखान्यांतील ॥

॥ संस्कृत पुस्तक माला ॥

श्रीत्रिविक्रमपण्डितविरचितः

# पञ्चायुधप्रपञ्चाख्यो भाणः ।

मूल्यं ८९ आणकाः

श्रीत्रिविक्रमपण्डितविरचितः

# पञ्चायुधप्रपञ्चाख्यो भाणः ।

स्मरकरतरवारिक्रूरधारानुकारी
तरुणहरिणनेत्रालोचनानां विलासः ।
कलयति हृदि येषामुच्चकैः स्वप्रभुत्वं
प्रभवति भुवि तेषामेष हर्षाय भाणः ॥

स च

बेळगांवपत्तने

बाबाजी रामचन्द्र सावन्त इत्यनेन स्वकीये रामतत्वप्रकाशाख्यमुद्रण-
यन्त्रालये मुद्रयित्वा प्रसिद्धिं नीतः ।

शाके १८१४

श्रीत्रिविक्रमभट्टविरचितः

# पञ्चायुधप्रपञ्चाख्यो भाणः ।

आताम्रे नयने स्फुरत्कुचभरः श्वासो न विश्राम्यति
स्वेदाम्भःकणदन्तुरं तव मुखं हेतुस्तु नो लक्ष्यते ।
धिक् को वेद मनः स्त्रिया इति गिरा रुष्टां प्रियां भीषयं-
स्तस्यास्तत्क्षणकातरेक्षणपरिस्पृष्टो हरिः पातु वः ॥१॥

अपि च

विलिख्य सत्याकुचकुम्भसीम्नि
पत्रावलिन्यासमिषेण राधाम् ।
लीलारविन्देन तया सरोषं
पायाद्धतः कोऽप्यभिहन्यमानः ॥ २ ॥

नान्द्यन्ते ।

**सूत्रधारः**— । आकाशे कर्णं दत्वा । अये कोऽयमभिहन्यमानमृदुमधुरमृदङ्गनिनदसंगतसंगीतभङ्गीपरिमिलनमनोहरो नागराणां कलकलः । तन्मन्ये सकलसुरासुरशिखरशेखरीभवदनवद्यशासनस्तम्बस्य भगवतः शम्बरारिपोर्वसन्तपूजामहोत्सवः परिसरोद्याने समारब्धः पुण्यपुरावलासिभिरिति । तदहमपि तत्र गत्वा किञ्चित्समयं मनो विनोदयामि । इति परिक्रम्य कतिपयपदानि गत्वा वामतोऽवलोक्य सानन्दम् । अहो मे नियतेः समुल्लासः । यत इतो मामकीनचिरप्रार्थनामर्थवतीं वितन्वानः केसरतरुपरिसरन्धुरसोदारमण्डपमलंकरोति समाजः प्राप्तरूपाणाम् । तदेतत्पादपमूलमुपसृत्य किञ्चिदभ्यर्थये । पुरस्तादुपसृत्य सप्रश्रयमञ्जलिं बध्वा । भो भो निखिलदिगन्तकान्ताजनकर्णपूरायितनिजयशोविस्ताराः सभास्ताराः कोऽप्येष भरतकुलकन्दलश्रिरपरिशीलितलास्यविद्याविलासेन विज्ञापया-

मि सभाजयितुमार्यमिश्रान् । किं ब्रूथ । साधु कुशलिककुलनन्दन साधु । वयमपि चिरादभिनवकविकल्पितामन्दरसोदारमधुरसन्दर्भगर्भितरूपकाभिनयविलोकनेनात्मनो मनो विनोदयितुमिच्छामः । अतस्तादृशमेकं रूपकं त्वया प्रयुज्यतामविलम्बेनेति । सविनयमञ्जलिं बध्वा । परमहमनुगृहीतोऽस्मि । किञ्च सकलकलाकलापेषु मद्विद्याद्य परां प्रशस्तिपद्यामधिरूढा । यतः

अल्पापि विद्या गुणवत्तराणां
या चित्तमारोहति सैव वन्द्या ।
परःसहस्रेषु विलासिनीनां
मनोरमा धन्यतमा प्रियस्य ॥ ३ ॥

विचिन्त्यात्मगतम् । अये नवमरसरूपकमादिशन्ति सभासदः । तदेतदिदानीमशक्यसंघटनमापतितम् । यतः

नवीनकविकाव्ये चेज्जागर्ति रसशालिता ।
पारिभद्रतरोर्गर्भे किं न स्यात्फाणितोदयः ॥ ४ ॥

सानुस्मरणम् । अये अतीतशारदोत्सवे विशालायां भगवत्याः कात्यायन्याश्चरणारविन्दवन्दनहेवाकसमागतमिलितेन मकरन्दकन्दलनाम्ना मे भावेन

कोमलपदविन्यासं प्रचुररसालम्बनं स्वलंकारम् ।
तरुणीजनमिव भाणं रसिकमनोज्ञं त्रिविक्रमश्चक्रे ॥५॥

मद्गुपज्ञमयमभिनवो भाणः प्रज्ञावतां समाजेषु त्वयाभिनेतव्य इति सादरमुक्त्वा मे समर्पितः । सोऽयमनतिचिराभ्यस्त एव सपदि सहृदयसमागमकन्दलितप्रमोदेन विस्मारितोऽपि दैवादनुस्मारितः । प्रकाशम् । अस्ति कश्चित्पञ्चायुधप्रपञ्चो नाम भवदुक्तलक्षणो भाणः । पुनः किं ब्रूथ । यदि तमेनमवगच्छामि निर्दोषं तर्हि सोऽयं त्वरितमभिधीयतामिति । सप्रश्रयम् । क. कुशलो मादृशः कृशाश्वी गुणदोषविज्ञाने काव्यस्य । परमहमेनावगानामि

आस्वादितं भवद्भिर्यद्गाणि तद्दृष्टमन्यथा ।
पीतं पयो राजहंसैर्वारि तैर्दूरमुज्झितम् ॥ ६ ॥

अथ वा

दोषा वाक्यपदस्थितास्तु बहुधा संवर्णिताः पण्डितैः
केनापि प्रतिपादितो न हि कवेः सांनिध्यदोषापरः ।
यस्मिन्नाग्रनि सर्वदोषनिवहः काव्ये समारोप्यते
क्षुद्रैः सोऽस्ति परं पुरोऽद्य भवतां भाग मया वर्णिते ॥ ७ ॥

पुनः किं ब्रूथ । किमभिधानः कतयितास्य रूपकस्येति । स खलु विश्रुतः स्यादेव कविर्दृष्टपूर्वश्च आर्यमिश्रैः ।

न्यायाम्भोनधिमन्दरः श्रुतिशिरःकासारपाठीनरा-
ण्मीमांसात्रमुनिश्रुतप्रकटितानल्पात्मधीवैभवः ।
यः साहित्यकलाविलोलनयनामाङ्गल्यसूत्रं दृढं
सोऽयं त्र्यम्बकपण्डितो विजयते यस्याग्रजः सोदरः ॥ ८ ॥

न केवलमग्रजो विद्याप्रदश्च । साश्चर्यमिव किं ब्रूथ । किमयमनवद्यमकवविद्यानिधे त्र्यम्बकविद्वन्मणेरनुजन्मना त्रिविक्रमेण प्रणीतो भाणः । तर्हि विदित एवायमस्माकम् ।

यत्कारुण्यात्कवयितुरमुष्याग्रजः ख्यातकीर्ति-
र्लोके सारस्वतजलनिधेः पारदृश्वा बभूव ।
सोऽयं विद्यागुणमणिखनिः सर्वमन्त्रात्ममूर्ति-
स्तातो यस्य त्रिदशसदृशश्रीव्हनानन्दनाथः ॥ ९ ॥

परं त्विदमेकं महदाश्चर्यस्थानम् ।

परिपक्वगोस्तनीफलसंमितमृदुमधुरपदमये काव्ये ।
तर्काभ्यासकठोरा मृदुतामुपयाति वाग्भुव्येति ॥ १० ॥

किमत्रानुपपन्नम् । व्याहरन्ति खल्वेव भवन्त एव

वैचित्र्याद्विपयस्य मार्दवजुषः कार्कश्यभाजः कवे-
र्वाचस्तत्र मृदुत्वकर्कशतयोरास्ते विरोधः कुतः ।

तस्याङ्गे दलदब्जदाममुभगास्तन्व्याः कटाक्षच्छटा
यस्यासौ सुलभा तदन्यहृदये हालाहलस्योर्मयः ॥ ११ ॥

परितोऽवलोक्य सहर्षम्। अहो रमणीयतास्य वसन्तकालस्य। अत्र हि

माकन्दच्युतपुष्परेणुपटलीक्लृप्तालवालोदरे
मन्दस्यन्दिमरन्दपूरभरितं वातोत्थपुष्पप्लवैः।
खेलन्तो ललितं मधोर्गुणगणान्गायन्ति पुष्पंधयाः
कान्तानामधरं धयन्ति मधुरं सक्तं मधूलीरसम् ॥ १२ ॥

सगर्वस्मितम्। अयं सुलभसमाराधनाः सपदि सभासद इति मे निश्चयः। यतः

कालः कोकिलकाकलीविशिखितानङ्गप्रतापोदयो
भाणस्यास्य कवेर्गिरो मधुझरीमाधुर्यजीवातवः।
नाट्यानामपि पारगा वयमियं संसद्गुणग्राहिणी
पुण्यैरेकपदेऽद्य नः समुदिताः सर्वे गुणा ईदृशाः ॥ १३ ॥

परिक्रम्य माकन्दस्तबकं निरूप्य।

गुञ्जन्मञ्जुमिलिन्दवृन्दवलनैरत्यद्भुतं वेपते
पाटीराचलमारुताभिगमने दोलायितं विन्दति।
मन्दस्यन्दिमरन्दबिन्दुकपटादश्रूणि मुञ्चत्यसा-
वुत्कण्ठाकुलितस्य संप्रति दशां धत्ते नु तेन स्वयम् ॥ १४ ॥

नेपथ्ये। साधु रे भरताचार्यपुत्र साधु। प्रस्तुतानुगुणवर्णनमहिम्ना महितोऽसि। ननु ममैव तादृशस्य विशीर्णभागधेयस्य दशां धत्त इति किं नोच्यते माकन्दस्तबकः।

**सूत्रधारः**— ससंभ्रमं नेपथ्याभिमुखमवलोक्य। अयं कलहंसलीलाविलोकनोत्कण्ठितस्वान्तस्य कन्दर्पविलासस्य भूमिकामादाय मदीयमातृष्वस्रेयः सवालुकामनामा कुशीलव इत एवाभिवर्तते। तदिदानीमस्तु कृतप्रदीपनविभवानुवर्णनम्। इति निष्क्रान्तः।

॥ इति प्रस्तावना ॥

ततः प्रविशति यथा निर्दिष्टः कन्दर्पविलासः ।

**कन्दर्पविलासः ।** सविषादोच्छ्वासम् ।

तास्विन्दुसुन्दरमुखीषु विराजमाना
संवर्तिका सुकमलोदरकर्णिकेव ।
साकूतदर्शनपथेन हृदि प्रविष्टा
चेतो धुनोति मम सा चपलायताक्षी ॥ १५ ॥

किञ्च

दरोन्मीलन्मल्लीघनसुभगसौरभ्यशिशिरः
कटाक्षस्तन्वङ्ग्याः क्षणमभवदापातपतने ।
पुनर्विश्लिष्टः सन् व्यथयति नितान्तं सपदि मा-
मतस्तं मन्येऽहं कुसुमशरनिस्त्रिंशमपरम् ॥ १६ ॥

क्षणं विचिन्त्य । अये कियती नाम दुराशाभूयिष्ठता कामिजनमानसस्य । यन्ममैव

नदूतीसंचारो न सरसपरोक्षोक्तिकलना
न सांमुख्ये हासः क्वचिदपि न वाचां व्यतिकरः ।
अहो चित्रं चेतः क्षणपरिचितालोकनवशा-
न्मुहुर्धावं धावं व्रजति सुदृशं नो विरमति ॥ १७ ॥

धिगिदं जाल्मत्वं मे मानसस्य। यदिदमसुलभमपि तादृशं जनं कतिपयवासरविलासानुभावावलोकनसंभावितमुपभोगमं मन्वानमस्वन्तं परिमोदते । सगर्हमात्मनो हृदयं प्रति ।

तत्तद्विभ्रमहावभावनटनैस्तां जातरागोदयां
मत्वा तुष्यसि मूढचित्त मृगदृशां साधारणास्ते गुणाः ।

किंचिद्विमृश्य । अयि स्वान्त शान्तवेदनं भव । अस्त्वेवं तथापि

द्वित्रास्तत्र तया प्रतारितजनालोकं मयि प्रागताः
स्निग्धापाङ्गदृशः प्रसादशिशिराः सन्त्येव जीवातवः ॥१८॥

साश्चर्यम् । अहो महदिदं जैवातृकत्वं मे चित्तस्य ।

हासस्तूत्कालिकाप्रदीपनपटुर्हस्ताङ्घ्रिनेत्राननं
तन्वङ्ग्या विषजातमेव भुजगी वेणी च रोमावलिः ।
किं न श्रीफलमुन्नतस्तनभरः कामं मनस्तामिमां
सर्वाकारविपाग्रमूर्तिनिवलां प्राप्यापि यज्जीवति ॥ १९ ॥

अत एव चास्य निश्चितानुवर्णनं युक्तमाभियुक्तानां शास्त्रेषु । मदनबाधां निरूप्य सोच्छ्वासमनङ्गं प्रति । हे भगवन्

चितजोऽसि मम चित्तमीदृशं
किं विदारयसि पञ्चसायक ।
क्रूरता पितरि लोकगर्हिता
सात्त्विकम् । श्रीभरस्य तव सौम्यता कुतः ॥ २० ॥

पुनः सदैन्यमञ्जलिं बध्वा । भगवन् रतिहृदयातिसंनिहित मकरकेतो प्रवीरवरमर्धन्यस्य तव कान्तानयनान्तविलोकनकुन्तकृन्तनिकृन्तने किमु सांप्रत वक्षासि मम निक्षेपः सायकानाम् । सासूयामर्षम् । रे रे कामहतक निजप्राणत्राणलम्पटस्य कामिलोकस्यायमर्थवाद एव यद्भवान् प्रवीर इति । न चेदेवं

कान्ताः कचैर्नियमयन्त्यपि यस्य बाणान्
बाल्भ्रुवा विदलयन्ति शरासनं च ।
शीर्णो रथोऽपि भुजगस्य मुखं प्रपन्नो
दग्धो दृशा पशुपतेः स कथं प्रवीरः ॥ २१ ॥

सविषादनिश्वासम् । हन्त हन्त चिरमनुचिन्तयन्नापि हृदयसन्तापनिर्वापणोपायं न पश्यामि । कुतः पुनर्मे सुखोदयो नाम मन्दभाग्यस्य । क्षणं विमृश्य । अयं स्वमनोभिलाषितानामङ्गनानां

स्थितिर्गेहोपान्ते परिजनगिरा सकलना
मुहुर्यातायाते सकृदपि गृहे व्याजगमनं ।

मुहुस्तद्योग्येऽपि क्षणपरिचयो वस्तुनि दृशः
समुत्पन्नप्रेम्णः सकलमिदमापानमुभयम् ॥ २२ ॥

अत तस्या मदीयधैर्यसर्वस्वमालिग्लुचमेचरावलोकिनानन्ताम्गाः दान्ताया ने न्तापान्तावगचितसंचार एव चिन्तयामि तदुपागमोपायम्। पूर्वांमृश्य क्षणमात्रं निश्चस्य।

ताद्विप्रलम्भविधुरं क्षणिकं जीवितं मम।
श्रेयांसि चिरसाध्यानि तदेतद्घटते कथम्॥ २३ ॥

सधैर्यावष्टम्भम्। अथ वा तत्रैव मया प्रक्रान्तं परिक्रमं

सा संचारचमत्कृतिर्नयनयोः स भ्रूलताविभ्रम-
स्ताद्बिम्बाधरपाटलस्मितयुतस्यास्यस्य सा वैखरी।
सेयं चंक्रमचातुरी चरणयोः सोऽप्यङ्गहारक्रमो
दिष्ट्या तन्मम नेत्रपात्रमखिलं जायेत जीवामि च॥ २४ ॥

अतस्तत्रैव गच्छामि। इति कतिपयपदानि गत्वा सर्वतो विलोक्य। अहो रमणीयतास्य प्रभातकालस्य। अत्र हि

पद्मिन्याः सकलां विधाय विधुरां ताराधिपः संपदं
तत्प्रेयस्युदयोन्मुखे सति रवावृद्धिप्रतामाश्रितः।
ताराः स्वस्य करैर्विकृष्य सहसा गच्छन्नितोऽस्ताचलं
लग्नाः काश्चन ताः प्रभाकरकरे पश्यन्पराग्ग्लायति॥ २५॥

किं च

संश्लिष्टा मानुरागं स्वकरपरिचयप्राप्तभूरिप्रसादा
या पूर्वा भुक्तपूर्वा रविकरकलितां तामवेक्ष्यामृतांशुः।
निर्नेताः पश्चिमाब्धौ प्रविशति हि सतां दुःसहो मानभङ्गः
किं वक्तव्यं सितांशोर्न तु सकलमतां मण्डलस्यापि नेता॥ २६ ॥

अपि च

उत्सिक्तः कुसुमासवैः कुमुदिनीं नाजाप्रियां पुष्पिणी-
मालिङ्गन्निशि निर्भयं परिचयं कुर्वन्पुनः पल्लवैः।

यावत्पङ्कजनीरजस्त्वमखिलं गृह्णँस्त्वयु प्रस्थित-
स्तावत्कल्य उपस्थिते निरुद्य विम्दग्भयाद्धावति ॥ २७ ॥

अन्यच्च

सौगन्ध्ये चलिते रसे विगलिते चाप्तालिवर्गे गते
म्लानातीव कुमुद्वतीयमधुना मूर्च्छां परामृच्छति ।
तामुद्वीक्ष्य तथाविधां कमलिनी जातप्रहासोन्मुखी
हन्तोदीक्ष्य विपन्नवैरिवनितां का वा न संतुष्यति ॥ २८ ॥

इतश्च

मुहुर्दिशं क्रोधकषायिताक्षी
विलोकयन्ती चरमां सचन्द्राम् ।
आसन्नभानुं प्रणयन् पूर्वां
प्रियं समासीदति चक्रवाकी ॥ २९ ॥

इति शिशिखान्तरं प्रविश्य चन्द्रशालामालोक्य । अहो स्पृहणीयतास्य युवमिथुन-
नसंवेशस्य ।

उपबर्हमम्बुजदृशो निजं भुजं
विरचय्य वक्त्रमपि गण्डमण्डले ।
निजसक्थि सक्थिनि निधाय सादरं
स्वपिति स्तनार्पितकराम्बुजो युवा ॥ ३० ॥

वामतोऽवलोक्य । इतोऽप्यहो धन्यतमा युवानः स्त्रीपुंसाः

सव्यासव्योरुबाहुव्यतिकरमधुरं कूर्परन्यस्तशीर्षं
संसक्तास्याब्जयुग्मश्वसितहतचलच्चारुनासाविभूषम् ।
भूयो निद्रातिरेकात्क्रमशिथिलभुजाश्लेषदत्तावकाशो-
च्छ्वासोद्गच्छत्कुचाग्रप्रतिहतहृदयं शेरतेऽमी रतान्ते ॥ ३१ ॥

अन्यतोऽवलोक्य साश्चर्यम् । कथमयमुरसि गुरुतरपयोधरभराक्रान्तका-
न्ताशरीरभारमुद्वहन्नपि सुखमेव स्वपिति विलासी । तथा ह्यस्य

शयानस्योत्तानं त्वदि निहितवक्षोरुहभरा
तिरश्चीने वक्त्रे निविडकलितात्मीयवदना ।
समाक्रम्योरुभ्यामतिदृढतरं सक्थियुगलं
स्वपित्यम्भोजाक्षी शिथिलभुजबन्धेयमधुना ॥ ३२ ॥

अथ वा

सहजप्रेमरसानां गुरुरपि लघुतामुपैति तनुरङ्के ।
कुसुममसोढनखाङ्कं तुन्दिलमधुपाँ छ्यूदृहति ॥ ३३ ॥

सौधान्तरं निर्वर्ण्य । अये मयाद्य निःशेषमासादितं चक्षुषः फलमेतस्या निद्राविरतिविभ्रमविलोकनेन भ्रमरकुन्तलायाः । इयं हि

उन्मृज्याक्षियुगं निबध्य चिकुरानन्योन्यसक्ताङ्गुली
पाणी संप्रति संप्रसार्य गगने भङ्गं तनोस्तन्वती ।
तन्वी भाति विमर्दितं कुवलयं बद्धं तमश्श्रेत्यद-
स्तिग्मांशोर्गदितुं सरोजयुगलं संप्रेषयन्तीव मे ॥ ३४ ॥

अन्यतो विलोक्य । अपूर्वमिदमाशिक्षितवञ्चनाचातुर्यं शातोदरीणाम् । यदियमज्ञातनिशावसानं प्रियतमभुजान्तरे रममाणा सीमन्तिनी

व्योम व्याममितं प्रयात्यपि रवौ मुक्ता न या निद्रया
सा धन्येति निशम्य यातृवचनं प्रोत्थाय तूर्णं ततः ।
भालं स्विन्नकपोलमूलमकरीकस्तूरिकाचर्चितं
कृत्वा याति बहिः शनैः करतले धृत्वा शिरः कुन्थति॥३५॥

नूनमियं निजकान्तभुजान्तरविश्लेषजनितमनोवेदनां शिरोवेदनाव्याजेन व्यनक्ति । अग्रतो गत्वा विलोक्य सहर्षम् । अये इतस्तावत्प्रियमित्रं मे मन्दारशेखरः

चक्षुः स्वापविलोपतोऽधरदलं वीटीरसामेकतो
वक्षः कुङ्कुमपत्रभङ्गकलितोत्तुङ्गस्तनालिङ्गनात् ।
आरक्तं दधदङ्कगण्डविलसत्कान्ताकपोलस्थली-
संपर्कार्पितरोचनाङ्कमकरीपत्रः समागच्छति ॥ ३६ ॥

सस्मितमुपसृत्य । सखे स्वस्त्यस्तु तव कान्ताकपोलतलपरिमिलनसंक्रान्तकान्तमकरीपत्राङ्कुरेभ्यः । ससंभ्रमं परिवृत्य किं ब्रवीषि । कथं प्रियमित्रं मे कन्दर्पविलासः । एहि सखे परिष्वजस्व माम् । आनन्दयसि चिरदर्शनेन । क्व प्रस्थितस्त्वमिदानीमिति । सहर्षमालिङ्ग्य । सखे त्वामेव सुचिरमन्वेषयन्निदानीमहं सफलश्रमोऽस्मि संवृत्तः । कथय कथय कया सह कृतार्थीकृता व्यतीता विभावरी पृथुश्रोण्या गणिकया किमाहोस्वित्कुलाङ्गनया । किं ब्रवीषि । सखे किमिदं मामपूर्वमिव पृच्छसि । अपि न जानासि गणिकाङ्गनासंगमे विरक्तो मे वयस्य इति । किन्तूपभुक्ता प्रगल्भकलत्रं कामाङ्गमञ्जरीति । सविस्मयम् । यद्येवं तर्हि कथमुपपद्यन्ते त्वयीमानि चिरसुरतलक्षणानि । यतः खलु परकामिन्यः

गच्छामीति वदन्त्य एव चरणं यच्छन्त्यलीकं पुरः
संस्पर्शादपि पूर्वमस्फुटमलंवादान्मुहुः कुर्वते ।
सङ्केते मलयानिलेऽपि चलिते तिष्टन्ति नैव क्षणं
का धन्यो विरतिं प्रपश्यति रतेरन्याङ्गनानां भुवि ॥ ३७ ॥

किं ब्रवीषि । एवमिदम् । न सन्देहः । तथापि किञ्चिदस्त्यन्ते कारणमिति । सकौतुकम् । कथय सखे किं तत्कारणं श्रोतुमस्ति मे कौतूहलम् । किं ब्रवीषि । पुरा खलु तया मया गौरीकुमारदशावस्थिताभ्यामकशालायामधीतं ।लीलायितं च । अये किं कथयामि

मादृशेऽपि मय्येव तस्याः प्रीतिरभूत्परा ।
भवितव्यानुगुण्येन घटयत्येव पद्मभूः ॥ ३८ ॥

अथातिक्रान्ते बहुतिथे काले

आलम्बयष्टिः स्मरविभ्रमाणा-
मच्छन्नता काप्यभितः स्तनाग्रम् ।
अदृश्यतादौ तदनुक्रमेण
पुन्नागशोभां च पुपोष तन्व्याः ॥ ३९ ॥

तदनु कदाचिद्गुरुनिदेशाह्निकचविचकिलकुसुमापचयाय ससंभ्रममहमहमिकया प्रवृत्तयोरावयोर्बलवदभूदन्योन्याङ्गसंघटः । तदानीमित्थमुदीरितं मया सखि कामाङ्गमञ्जरि

इतः परं दुर्लभोऽयमावयोरङ्गसंगमः ।
प्रव्यक्तयौवना चेत्त्वं क्व मां स्पृशसि भाषसे ॥ ४० ॥

इदमाकर्ण्य सा मामवादीत् । सखे मैवं वादीः ।

तव मच्चित्तवसतेर्दुर्लभो नाङ्गसंगमः ।
करिस्कन्धाधिरूढस्य कथं दूरेऽस्ति चूलिका ॥ ४१ ॥

इति । अथ सा कतिपयैरेवदिवसैरधिगतार्तवा निजजनकेन पतिसदनं प्रापिता । ततो मां प्रति रहसि पत्रिकां प्राहिणोत् । तत्र स्थितमिदं पद्यमालिखितं

सरसिजमुकुले नियन्त्रितास्ते
विचकिलवाससखी तवाद्य भृङ्गी ।
अनुसर सरसीं मिलिन्द नूनं
कथमपि तत्र भवेत्प्रियानुषङ्गः ॥ ४२ ॥

इति । सश्लाघम् । साधु कुशले कामाङ्गमञ्जरि । विचकिलोपकण्ठजल्पितमनुस्मारयन्त्या स्वसंवसथमुपागतेऽस्मिन्मन्दारशेखरे योग्यकाले स्वसमागमसंभावना त्वया निपुणतरं निर्दिष्टा । सखे ततस्त्वया किं व्यवसितम् । किं ब्रवीषि । ममपुनर्गुरुपरतन्त्रस्य गमनमिषमन्वेषयतोऽन्तरा व्यतीतोऽभूदेको मासः । ततः

अरक्तासु रक्ताः सरागास्वरागा
युवानो भवन्तीति शंसन्ति लोके ।
वयं नैव जानीमहे तस्य बीजं
विजानासि चेद्ब्रूहि किं तस्य तत्वम् ॥ ४३ ॥

इति तया मदुपालम्भगर्भः श्लोक एको विलिख्य तथैव प्रेषित इति । साश्चर्यम् । अये अपूर्वोऽयं पराङ्गनानां स्वतः परपुरुषाभिगमोद्यमो बन्धुजीव इव गन्धोदयः । ततस्ततः । किं ब्रवीषि । ततः परमहमितः परमसां-

प्रतं विलम्ब इति निश्चित्य भगवतो मदनदमनस्यदमनमहोत्सवावलोकनव्याजेन तदावासं मणिमण्डनं नाम नगरमुपेत्य प्राक्तनसंदेशहारिणीमुखेन समधिगतमदागमायाः प्रियाया वचनेन कमपि सङ्केतनिवासं प्रापितोऽस्मि । ततस्तत्र

कांश्चिद्भूरिमनोरथैः कतिपयांस्तत्कृत्य संचिन्तनै-
रप्यन्यांस्तदनागमोचितगुरुप्रत्यूहशंकाशतैः ।
आ प्रातर्विफलान् क्षणान् गमयता मित्रेण कृच्छ्रेण ते
नीताः किं कथयामि कल्पसदृशाः प्रत्येकशो रात्रयः ॥४४॥

तथाप्यलब्धमनोरथेन मयेत्थमनुचिन्तितम् । सा किल कलहंसगमना श्वशुरकुलोत्थविविधनिर्बन्धनिरुद्धगमना न हि प्रभवति निशायां बहिरागमे । मम पुनस्तद्गृहगतस्य कदाचित्क्वाचित्संभाव्यते प्रियासमागमः । तदेतदतीवदुर्लभम् । यतः

यूनः संगतयौवतं परगृहं व्याजैर्विना दुर्गमं
व्याजेनापि गतस्य तद्गृहजनैर्मैत्री ततो दुर्लभा ।
तन्मैत्रीमपहाय तत्र सततं वासो न संभाव्यते
सातत्यं वसतौ न चेदभिमतं श्रेयः कथं सिद्ध्यति ॥ ४५ ॥

किं च

विश्रम्भोदयहेतवे गृहजुषामावर्जनीयं मनः
शङ्कातङ्ककलङ्किना मनसा स्थातव्यमेवानिशम् ।
प्रेयस्या मधुरावलोकनभवा भावाः पुनस्तादृशा
दुर्वारा अपि हन्त कैतवशतैः संगोपनीयाः सदा ॥४६॥

इति । सखे सत्यमेवैतत् ।

नाह्वानं सुकरं पराम्बुजदृशामन्यार्थशब्दैर्विना
ज्ञातप्रेम्णि तथा स्त्रियां व्यवहृतिर्ग्रीवामसून्नेष्यति ।
आलापेष्वकृतेषु जाग्रति पुनर्नाना वितर्का नृणां
धिग्रक्तान्यवधूनिशान्तवसतिर्निखिलशाधाराग्गतिः ॥४७॥

ततस्ततः । किं ब्रवीषि ।

मास्तु त्रस्तकुरङ्गशावकदृशस्तुङ्गस्तनालिङ्गना-
द्यारम्भः कलये धृताञ्जलिरहं धातस्तव प्रार्थनाम् ।
यातायातविवर्तिताननमिलद्व्याजस्मिताम्रेडित-
स्निग्धापाङ्गविलोकनामृतलवैस्तस्याः सकृत्सिञ्च माम्॥ ४८ ॥

तेन वा स्तोकफलितमनोरथः सन् गच्छामीति बहुतरमनुनाथता मया प्रियादर्शनमपि न लब्धमेव । ततोऽहं ततो निर्गन्तुकामः पद्यमिदं विलिख्य तां प्रति प्राहिणवम्

गन्धाहूतमिलिन्दे केतकि निकटं समागते भृङ्गे ।
पत्रच्छन्ना मुखमपि नोन्नमयसि किमिह गच्छतु मिलिन्दः॥४९॥

दयितापि

अलमलमयि भृङ्ग चापलैस्ते
मुकुलितपङ्कजगर्भवासरुद्धा ।
अभिगमसमयं तवाद्य भृङ्गी
कलयति चेतसि मा जहीहि धैर्यम् ॥ ५० ॥

इति पद्यं कबरीकलितप्रत्यग्रकेतकपत्रे मृदुनखमुखैर्विलिख्य मां प्रति प्राहिणोत् । तेनाहं सप्रत्याशः सुस्थितोऽस्मीति । (सश्लाघम्) । सखे केन वर्ण्येत तादृशस्य ते पुण्यगरिमा ।

कचान्तरनिगूहितः करसरोजसञ्चालितो
मुहुः प्रणयसंभृतः स्तिमितलोचनेनेक्षितः ।
नखैर्विलिखितस्तया सुभगसुन्दरः सुभ्रुवा
स केतकमृदुच्छदोऽप्यहह यस्य दौत्यं गतः ॥ ५१ ॥

ततस्तया किं व्यवसितम् । किं ब्रवीषि । अथ तया स्वार्थघटनासंविधानविदग्धया

भक्त्या निस्तुलया पतिर्गुरुजनः शुश्रूषया यातरो
भूरिस्नेहरसार्जवैः करुणया गुर्व्या भुजिष्यादयः ।
वात्सल्येन ननान्दृदेवरमुखाः संप्रश्रयैर्बान्धवाः
सत्कारैर्विविधैःसरोरुहदृशा सर्वे तया निर्जिताः ॥ ५२ ॥

तेन स्वस्यामनिवार्यविश्रम्भेषु सकलजनेषु सेयमेकदा निशीथसमये पतिमतिगाढमालिङ्ग्य शयानमप्यवधूय केनाचिददृश्यरूपेणेव भूतेन विकृष्यमाणा पुनः प्रसारितेन दक्षिणकरेण परिभुग्नेनावलग्नेन कटितटस्खंसमानवसनावलम्बिना दक्षिणेतरकरेण दिशि दिशि विकीर्यमाणैर्दीनदृक्तरङ्गैस्त्रायध्वं त्रायध्वमित्यनुकलकृतविलापसंशोपितेन वदनेन वेपमानाभ्यां चरणाभ्यां च गत्वा सदनालिन्दसीम्नि कश्मलमुपगतेव निपपात। अथ सोद्वेगमापतितैः स्वबान्धवैरानीतेषु भिषग्वरमान्त्रिकेषु तदानीमलसोन्मीलितपक्ष्मणी विलोचने परितः संचार्य विकृतं विहस्य

अलं मन्त्रैश्च तन्त्रैश्च भेषजैरपि बालिशाः ।
अहमस्म्यहमस्म्यस्यामज्ञात्वा किं विधीयते ॥ ९३ ॥

इत्युदीर्य क्षणमात्रं विरराम । अथ तदेतत्किमपि दैवतं मन्वानैस्तैर्विधीयमानासु बहुविधप्रार्थनासु पुनरेवं जगाद । अरे रे अहमेष मणिभद्रनामा वैश्रवणानुचरः । पुरैकदा मलयमरुद्वलनचलदलकचलदलतिलकविलसदलकनन्दातटसीम्नि पुत्रार्थं तपस्यतोरनयोरीशीनरयोर्जायापत्योरिमां कामयमानं मां प्रस्तरो भवेति शशाप निजस्वामी। अथ सानुक्रोशेन तेनैव शापावसानमनुगृण्हता मदाशयज्ञेन अयि मणिभद्र नूनमिमौ दम्पती जनुषि भाविनि कामाङ्कमञ्जरीप्रगल्भनामानौ भविष्यतः । तदानीं

आ पुत्रोदयमेतस्यां रमस्व त्वं यथा सुखम् ।
गेहे वास्या यथायोगं नीत्वा वा मन्दरालयम् ॥ ९४ ॥

इत्यादिष्टोऽहमिहागतोऽस्मीत्युक्त्वा विरराम। ततः

सर्वनाशे समुत्पन्ने त्वर्धं त्यजति पण्डितः ॥

इति न्यायमनुसृत्य तदीयबान्धवा विविधपूजोपहारैः संतर्प्य दयालो यक्षराज अलमस्याः सुन्दर्या मन्दरकन्दरप्रापणेन। अस्मिन्नेव मन्दिरे समस्तभोग्यवस्तुसमन्विते रमस्वेति नाथयन्तः साष्टाङ्गं प्रणेमुः। अथ मन्दं मन्दमुन्मील्य लोचने स्तोकं विहस्य शृणुत रे मानवा युष्मत्कृतसत्कारप्रसन्नेन

पूर्वापरविभागेन विभावर्या यथाक्रमम् ।
पत्या मया च सेव्येयमिति दत्तो वरो मया ॥ ९९ ॥

अन्यच्छृणुत हितं वचः

मणिभद्राभिदं यक्षं कामरूपधरं तु यः ।
अध्यक्षीकुरुते सोऽयं नूनं प्राणैर्वियुज्यते ॥ ९६ ॥

इति जागर्ति मे भर्तुरनुशासनम् । अतो भवद्भिर्वर्तितव्यमवहितैरित्युदीर्य समुत्प्लुत्योच्चै रटन्ती परतः पपातेति । सखे ततस्तया किमाचरितम् । किं ब्रवीषि । अथ सा मन्दं मन्दमुत्थाय समुन्मीलितलोचना विस्मयमानमानसेव किमेतदिति तत्रत्यानन्वयुङ्क्त । अथ तैर्निवेदिते सकलोदन्ते दीर्घतरं निश्वस्य

स्वप्नेऽप्यदर्शिततनूरितरस्य पुंसो
यक्षाङ्गसङ्गमुपयातुमहं न हीशे ।
शीलक्षतौ मम कुलद्वयगर्हिताया
नैव स्थितिः समुचिता विमले कुले वः ॥ ९७ ॥

इति बाष्पप्लवपरिप्लुतलोचना श्वशुरमुख्यान्प्रणम्य स्वप्राणप्रहाणायाभ्यनुज्ञामनुननाथ । अथ तैर्बहुभिः प्रकारैः समाहिता सा स्वकृतामिदमखिलं मे समावेद्य विविक्तदेशपरिकल्पितमनल्पभोग्यवस्तुप्रपञ्चसमन्वितं हंसवरगरुद्गौरतरप्रच्छदाम्बरसंछादितहंसतूलकृतमहेन्द्रगोपपटतल्पकलितकाञ्चनमञ्चकमनीयमनयन्मां केलीगृहम् । तदाप्रभृति तत्कालोपदर्शितकितवयक्षप्रत्ययस्तया सह रममाणो वर्तेऽहं निःशङ्क इति । अये सकललोकातिलङ्घी प्रतिभाविशेषस्तन्वङ्ग्या ययेयमालोचिता निष्कण्टकसरणिः । भवतु कथमत्रेदानीं तस्याः समागमः । किं ब्रवीषि ! राजकार्यानुरोधादत्रैवास्ते बहून्यहानि तत्पतिः । श्वशुरेण साप्यत्रैव प्रेषितेति । तर्हीदमुपपद्यते । एहि गच्छावः । अग्रतो गत्वा विलोक्य । सखे पश्य विभ्रमावर्तर्नमदनाङ्गणान्निर्गत्येयं विलासवल्ली

मुक्तामुक्तविलोचनाम्बुजयुगा निद्रां दधाना तनुं

लुप्तालुप्तविशेषका कुचभरभ्रश्यद्दुकूलाञ्चला ।
स्रस्तास्रस्तकचप्रकीर्णकुसुमा भूयस्खलन्ती गतौ
मन्दं गच्छति चोलबन्धनविधौ व्यापारयन्ती करौ ॥ ९८ ॥

किं ब्रवीषि । केयं विलासवल्ली नामेति । सखे न जानासि किमेनाम् । इयं खलु वाराङ्गना । सस्मितं किं ब्रवीषि । किमियं वार एवाङ्गना नहि निशायामिति । विहस्य । एवमिदम् । निरन्तरामियं निशायां पुरुषायते । किं ब्रवीषि । सखे किमेतत्

ताम्बूलस्य रदच्छदादरुणिमा निर्निद्रनेत्रोद्गत-
स्तन्व्याः पक्ष्मपुटी वृणोति कलितौ गण्डौ नखाङ्कव्रणैः ।
अर्धक्षालितयक्षकर्दमरसोदारं प्रकोष्ठद्वयं
किन्त्वस्याः कुचयोरमृष्टमकरीपत्रं युगं दृश्यते ॥ ९९ ॥

इति । अये निसर्ग एवायं निजरूपलक्ष्मीप्राणनालस्य कुचयुगलस्य संगोपनं रूपाजीवराजीवदृशः । तथा हीयं मार्दवापातभाता

आश्लेषेऽपहरत्यतीव त्वदयं हस्तग्रहे यत्नतः
पाणिं वारयति प्रियस्य न परीहासापदेशान्मुहुः ।
उत्तानं शयने सदा स्वपिति न स्वप्नेऽपि तद्व्यत्यया-
त्कामं गोपयति स्तनौ जघनमप्येवं न गोपायति ॥ १०० ॥

किं ब्रवीषि । सखे सत्यमिदं जघनगोपने कथमर्थलाभ इति । पुरोऽवलोक्य । कासौ

निश्वासानिलकम्पितस्तनतटी संचारयन्ती करौ
धम्मिल्लस्य नियन्त्रणेऽसाविगलच्चेलाञ्चलोदञ्चने ।
गच्छन्ती ललना किमप्यगणितश्रोणीभरं सत्वरं
वेगस्रस्तदुकूलरुद्धगमना दीनं दिशो वीक्षते ॥ १०१ ॥

किं ब्रवीषि । सखे सेयं कैरवामोदस्य कलत्रं भोगदा नामेति । तर्हीमां जानामि । अस्याः

हासं वेद परो न दन्तवसनाद्वीक्षां न पक्ष्मेतरो

नागारप्रघणोऽपि पादपद्वीं वाचं न कण्ठेतरः ।
अङ्गान्यप्यखिलानि वेद न पतिस्तद्वेद नो वाम्बरं
सेयं संप्रति पद्मपत्रनयना चित्रं बहिर्भ्राम्यति ॥ ६२ ॥

किं ब्रवीषि । सखे लोकप्रतारणैकगृहीतशीलानामन्यादृशमेव साहसरसिकत्वमसतीनाम् । तथा हि

वेपन्ते बलवद्विलोक्य मुसलीं त्रस्यन्ति शिल्पारवा-
द्राहन्ते निरनुप्लवा न हि दिवा गर्भालयं पांसुलाः ।
कान्तारे च वने निकुञ्जभवने शैले सरित्संनिधौ
स्वच्छन्दं विहरन्ति हन्त कमनानन्वेषयन्त्यो निशि ॥ ६३ ॥

इति । सखे बलवती खलु कुसुमशरमहाराजाज्ञाविभूतिः । तया परवतीनां युवतीनां नायं दोषः । सशिरःकम्पं किं ब्रवीषि । सखे सत्यमाह भवान् ।

नाज्ञा पञ्चशरस्य चेद्बलवती शैलायते देहली
यासां पद्मपलाशसुन्दरदृशां तासां निशीथे पुनः ।
वृत्रो मित्रमुपानहौ च शललीपुञ्जो निकुञ्जो गृहं
शय्या लूनशिखः कुशः फणिमणिर्दीपः कथं वा भवेत्॥६४॥

इति । सखे धिग्जन्म गुणिनोऽपि कृतघ्नस्य ।

अधिकृतो जघनस्तनगोपने
भुजशिरोऽप्यधिरोप्य च लालितः ।
यदयमद्य विशालदृशं पटो
व्यथयति स्फुटरूढगतिक्रमः ॥ ६५ ॥

किं ब्रवीषि । अये निरन्तरबहुमानलालिताः सकृदवमानिताश्चैद्वैरीभवन्तीति न खलु वितथो लोकवादः । तदेतदाकर्ण्यतां

प्रियाप्राप्यस्तादृग्घनजघनवक्षोरुहतटी-
समाश्लेषः कण्ठग्रहणगरिमा पक्ष्मलदृशः ।

चिरं येन प्राप्तः स तु रतसमारम्भसमये
निरस्तश्चेद्दूरे कथमिव न कुर्यादपकृतिम् ॥ ६६॥

इति । परिक्रम्य प्राचीमवलोक्य ।

विप्रार्घ्यशरदलितोर्ध्वचरप्रमत्त–
मन्देहदेहगलितक्षतजाभिषेकैः ।
रक्ताङ्गको दशशतांशुरितोऽखिलात्मा
पूर्वावनीधरशिरः समलंकरोति ॥ ६७ ॥

सखे किं ब्रवीषि । किं फलमिदानीमर्घ्यदानेन विप्राणामिति । सखे न हि नित्यो विधिः फलाभिसन्धिमपेक्षते । किं ब्रवीषि । अहं मन्ये विप्रियाचरणमेवास्मद्विधानां तत्फलम् । न चैवं

उद्यन्कामिमनोरथान्विघटयत्यम्भोजिनीवल्लभ-
स्तं रुन्धन्ति दयालवः सुकृतिनो मन्देहदेवद्विपः ।
तानेतान्विनिहत्य मन्त्रितपयःपूरासिधाराशतैः
किं विन्दन्तितरामुदर्कमथ वा सान्दृष्टिकं भूसुराः ॥ ६८॥

इति । सखे निशाचरत्वसाधर्म्यान्मन्देहेपूद्वहसि पक्षपातम् । उपकारिणस्तु नो विप्रा एव । शृणु तावत्

रुन्धन्तो दिवसमुखे सहस्रभानुं
मन्देहा यदि न हता द्विजार्घ्यतोयैः ।
संप्राप्ता भवतु कथं पुनस्त्रियामा
सा नो चेत्कृतममनोरथः फलेन्नः ॥ ६९ ॥

पश्य सखे । अहिमार्तिपदं जगाद्विशङ्कं
कमलामोदजुषो मरुत्समूहान् ।
विरचय्य हराविहापयाते
प्रविषीदन्ति हि पांसुलावलायाः ॥ ७० ॥

किं ब्रवीषि । स्थाने खलु महेन्द्रोदयभीरुत्वं बलादीनामिति । अव-चकासारकमलिनीं निरूप्य । सखे पश्य पश्य

आलम्व्य स्वकरैः पयोधरभरं प्रोत्सार्य नेत्रावृतिं
गात्रोद्भासिनितम्बमस्फुटनभोमध्यं समाक्रम्य च ।
संप्राप्ते दिवसश्रियं निजपतौ रक्तेऽधुना पद्मिनी
दृष्ट्वा मन्दगलन्मरन्दकपटादश्रूणि मुञ्चत्यसौ ॥ ७१ ॥
विषादाविर्भावं स्वगतमवलोक्यापि बहुशो
गतो यः सापेक्षं नियतमपराशावशतया ।
करैस्तस्मिञ्जाता स्पृशति सविकासाद्य नलिनी
जडानां न व्रीडा न हि रसवतीनामतिरुषा ॥ ७२ ॥

किं ब्रवीषि । चरम एवात्र सखे प्रथमः कल्प इति । अये पश्य

ध्वान्तोत्सारणमब्जकोशदलनं चन्द्रप्रभामोषणं
कोकीतोषणमैन्दवोपलगलद्वारिच्छटाशोषणम् ।
शश्वत्कैरवपेषणं च युगपत्सोऽयं तनोत्यंशुमान्

किं ब्रवीषि ।

कर्तुं नैककरस्य तस्य किमिवाशक्यं जगच्चक्षुषः ॥ ७३ ॥

इति । सर्वतो विलोक्य ।

एते नूतनपद्मरागशकलच्छायासनाभित्विषः-
स्तिग्मांशोः करकन्दला नवनवा रोदोन्तरं वृण्वते ।
छिन्दन्तः समुपेत्य कोमलदलभ्रान्त्या रसालस्य या-
न्यत्नोदञ्चितचञ्चवः पुनरमी श्राम्यन्ति पुंस्कोकिलाः॥ ७४॥

पुरो गत्वा विलोक्य । कासौ

पादन्यासे प्रपदविधुतप्रोच्चरच्चारुचेला
वल्गद्वक्षोरुहतटनटत्तारहाराभिरामा ।
कर्णप्रान्तोच्चलितललितापाङ्गमालोकमाना
यूनः कापि भ्रमति परितः पिप्पलं पक्ष्मलाक्षी ॥ ७५ ॥

किं च

दरविवृतमुखान्तर्दृश्यदन्तालिरोचिः-
पारिचयपुनरुक्तोद्योतमुक्ताच्छगुच्छान् ।
किमपि जपति नासाभूषणे लम्बमाना-
न्दशनवसनभासा रञ्जयन्ती नितान्तम् ॥ ७६ ॥

सखे पश्येमामक्षस्रजं

यो यः पाणिग्रहणाद्रक्तो मुक्तामणिः स्रजि प्रोतः ।
स स वहति पाण्डिमानं विरहीवास्याः कराञ्चलविमुक्तः ॥ ७७ ॥

सोत्कण्ठमक्षमालामुद्दिश्य ।

एषा भ्रामयतीति पद्मनयना दोलायितं मा गम-
स्त्वं मुक्तासर तत्कराञ्चलपरिष्वङ्गेण धन्यस्त्वासि ।
पश्यैतानि मनांसि नो विधिहतान्यस्पृष्टदृष्टान्यपि
त्रस्यद्वन्यमृगीचलाचलदृशा भ्राम्यन्ति ताम्यन्ति च ॥ ७८ ॥

पश्चादवलोक्य । अये सकलनगरविलासिनीजनवृत्तान्तानामभिज्ञः सखा शृङ्गारचषक इत एवाभिवर्तते । तदेनं पृच्छावः । एहि सखे शृङ्गारचषक कथय केयं पिप्पलपार्श्वपरिवर्तिनी। किं ब्रवीषि ।अयि कन्दर्पविलास कृत ते परिहासशीलतयेति। सखे भवानकाण्ड एवैवं ब्रुवाणः कलयति मनसि किमपि सन्देहम् । किमियं त्वया भुक्तपूर्वा पर्वेन्दुमुखी । किं ब्रवीषि। कथमिदमद्यापि भवान्न जानातीति। सखे को नाम विज्ञाता निगूढस्य त्वदपदानस्य। किं ब्रवीषि। शृणु तर्हि कथयामि साकल्येन । इयं खलु लीलाधरकलत्रं रसोर्मिका नामेति । मन्दारशेखर किं ब्रवीषि । सखे कथमासादिता भवतेति । शृङ्गारचषक किं ब्रवीषि ! तदेव मया कथ्यते समाकर्ण्यताम्। पुरैकदा भद्रदत्तधर्मदारानात्मनो गन्धर्वविद्योपाध्यायनन्दिनीं भावुकचर्चां पितृकुलोदन्तमावेदयितुं सदनमेतस्याः प्रति गतोऽहमभवमिति । कोऽसौ भद्रदत्तो नाम। किं ब्रवीषि। अस्या एव भर्तुर्जघन्यजो भ्रातेति। भवतु ततस्ततः। किं ब्रवीषि। तदानीं

आसीनास्त्वखिलास्वपि स्वयमथो प्रोत्थाय सद्योऽनया
सव्रीडस्मितमन्थरं सललितं यान्त्या गृहाभ्यन्तरम् ।
कर्णोपान्ततरङ्गितासितसरोजातत्विषा चक्षुषा
तन्व्या तत्र मदाभिमुख्यकलितो दृष्टो मुहुर्दर्पणः ॥ ७९ ॥

तेनाहं जनितप्रियानुरागप्रत्ययः सकलजनानुरागमन्तरेण न घटते मे वाञ्छितमिति निश्चित्य

बालान्क्रीडनकैः स्तवैः प्रवयसो यातॄः प्रियानिन्दया
यूनश्चाटुकथाविनोदनरसैर्वित्तैर्नियोज्यानपि ।
दौहित्राद्युपलालनाकलनया श्वश्रूं ननान्दॄः पुनः
शिल्पैर्नैकविधैर्जनान्समनयं तस्या गृहस्थान्वशम् ॥ ८० ॥

प्रख्यापितं च मया कपटाभिसन्धिना स्वस्मिन्मिथ्येन्द्रजालकलनावैदग्ध्यमिति। मन्दारशेखर किं ब्रवीषि। सखे कुत्रोपयोगस्तत्प्रख्यापनस्येति। सखे किमेवं ब्रवीषि। भविष्यत्येव कदाचित्कुत्रचित्तस्योपयोगः। शृङ्गारचषक ततस्ततः। किं ब्रवीषि। तदनु गानविद्याप्रणयिनः प्रियाया देवरस्य मम संपन्नो गरीयान्मित्रभावः। अथैकदा निःशलाके

प्रोदञ्चिते कुचभरे निबिडं निपत्य
पश्चान्निपेधनमितं वदनं नताङ्ग्याः ।
अंसानुविद्धमणिबन्धकरद्वयेन
यत्नादुदस्य च मयाधर आशु पीतः ॥ ८१ ॥

तदानीमेव नियतिप्रातिकूल्यात्तत्रैवागता सा भावुकचर्चेति। हन्त हन्त अत्याहितं प्रियमित्रस्य। ततस्ततः। किं ब्रवीषि। सखे किं कथयामि

अतुदन्मां तदा तस्या गुरुपुत्र्या निरीक्षणे ।
अत्याहितापातशङ्का किंशारुरिव कञ्चुके ॥ ८२ ॥

अथ सप्रार्थनं पादयोरवनतमपि सोदर्यनिर्विशेषं मामननुरुध्य चिरनिबद्धयातृद्वेषा सैषा निजपतिमिदमखिलमावेदयादिति। हन्त हन्त
सौख्यानुकम्पास्नेहेभ्यो वैरं प्रणयि यापिताम् ।

तदेवानुसरन्त्यस्ता गणयन्ति न तानि यत् ॥ ८३ ॥

इति । ततस्ततः । किं ब्रवीषि । अथ तस्या देवरस्य मयि

निवृत्तः संलापे प्रणयरसमाधुर्यगरिमा
तनुभृतः कामं जनिततनविस्रम्भमहिमा ।
समुत्पन्नः शश्वद्विनयगुरुसत्कारलघिमा
मुखे चित्तस्थेमा प्रकटित इवाभून्मलिनिमा ॥८४ ॥

तदानीमहं प्रयत्ननिगूहितहृदयातङ्को धृतिमवलम्ब्य सखे सखे भद्रदत्त तव सपदि मयि समुत्पन्न इवाभाति चित्तवृत्तिविपर्ययः। हेतुस्तु न लक्ष्यते। इत्युदीर्य मुहूर्तमिव विचिन्त्य स्मृतिमभिनीय विहस्य पुनरेवमवोचम् ।

अघटितघटनाविधौ पटीयः
सपदि सखे विदितं महेन्द्रजालम् ।
प्रकटितमिह यत्पुरः प्रियाया-
स्तव बत नावपि यद्बभञ्ज मैत्रीम् ॥ ८५ ॥

किं च

मैत्री गलितविस्रम्भे मित्रे न स्थातुमर्हति ।
स्थिताप्यलर्कविषवत्कालेऽनर्थाय कल्पते ॥ ८६ ॥

अतः कृतं ते स्नेहानुबन्धेन । स्वस्त्यस्तु गच्छामीति सरोषमिव भाषमाणे मयि सोऽयमतिसरलमतिरिदमखिलमिन्द्रजालविलसितमेव मन्वानो बहुविधप्रणयोक्तिभिरनुनीय जननेनं समादधे । तेनाहं शिथिलातङ्कस्तया सह योग्यकाले रममाणः सन् विचरामीति। सखे तदेतदास्ताम् कथय किमर्थोऽयमेतस्यास्तरुपरिक्रमायासः । किं ब्रवीषि । पुत्रार्थं इति । सस्मितम् । अयि युवरसिकावतंस त्वयाप्यनुत्पादितं सुतमेतस्यै स्थावरोऽयं प्रवृद्धविटपः प्रयच्छतीत्याश्चर्यम् । अथवा प्रियायौवनापसरणभीरुणा त्वयैव समुपेक्षितः स्यादस्याः सुतप्रसवः। किं ब्रवीषि। सखे ममेदममतमपि बाढमाह भवान् ।

नूनं सुतजनिचलिते तारुण्ये स्त्रीषु का रतिर्यूनाम् ।

किं विन्दन्ति मिलिन्दा गलितमधूलीषु पद्मपालीषु ॥ ८७ ॥

इति । एतमेनामुपगच्छामः । उपसृत्य ।

चलदल्कं हरिमध्यं परितस्तरुमेनमङ्गना भ्रमति ।

मन्दारशेखर किं ब्रवीषि ।

आत्मानुरूपमेव प्रायेण भजन्ति कामिन्यः ॥ ८८ ॥

इति । शृङ्गारचषक उपसृत्यैनां किं ब्रवीषि ।

गतिविहसितराजहंसि हंसि
त्वमिह कटाक्षशिताशुगेन यूनः ।
तव तरुपरिचर्यया फलं किं
न खलु फलन्ति तपांसि हिंसकानाम् ॥ ८९ ॥

इति । अयि सुभ्रु सभ्रूभङ्गं किं ब्रवीषि । शृङ्गारचषक जोषं गच्छ पुरः पन्थानमाकलयन् । सपदि मया सोढापराधोऽसि पतिमख इति । अन्यथा पतिवर्त्नीं निःशङ्कमेवं ब्रुवाणः शिक्षणीय एव भवानिति । अपवार्य । सखे शृङ्गारचषक सांनिध्यदोषादावयोः सखिशब्दमधिकं प्रयुङ्क्ते ते प्रियतमा । मन्दारशेखर किं ब्रवीषि । किमेनमन्यथा पतिरित्येव व्याहरति हरिणाक्षीति । शृङ्गारचषक सावज्ञमिव किं ब्रवीषि । सखे किमेवमुच्यते । सेयं मां प्रतिसंलापावसरे

दयित प्रियतम वल्लभ कान्त प्राणेश जीवितेशेति ।
सरसानपास्य शब्दान्पतिपदमरसं कदापि नोक्तवती ॥ ९० ॥

इति । सत्यमिदम् । इदं पदं परिणीतजन्तुमाधारणमस्माद्विधेषु न प्रयुञ्जन्ते परकामिन्यः । सखे तिष्ठतु भवाननया सह नर्मालापशर्मणः पात्रीकुर्वन्नात्मानम् । आवामितो वेशवाटीं गच्छावः । गत्वा विलोक्य । इयं खलु सखे धनिकविलासिसदनसङ्केतशालासमापतत्सीमन्तिनीपदपातितरतिशिथिलनिविरीसकवरीभरान्तरालपरिगलितविततमालतीकुसुमगर्भैस्तनुलतामुपितस्वकीयसौरभ्यसौकुमार्यसंपत्तिमिव सप्रणाममनुनाथयद्भिरभ्यर्च्यमानमध्यपथा क्वचिदभ्यस्यमानसंगीतकलानियमविभ्रंशकुपितमृदङ्गिचत-

हस्तभरतविद्योपाध्यायकरिष्यमाणसंताडनशङ्कासमाकुञ्चितशरीरतया नवोढाङ्गनासुरतचलितमिवानुकुर्वतीभिर्वेशकुमारिकाभिरलंकृतरङ्गशाला क्वचित्पुनरतिमृदुलकरकमलतलविरचितविमर्दनाशिथिलीकृतदरविवृतनिद्रासमुद्रेकसमाकुञ्चितपक्ष्मपुटविवरदरदरीदृश्यमानविषमपदनिहितपदविस्खलद्विलासिनीजनमनोहरविभ्रमविलोकनेच्छाचलितकन्धरसरभसगमनकमनाङ्गसंघट्टननिपातितगन्धोत्तमामदमत्तमत्तकाशिनीसमुद्धरणचटुलैककरचेटिकाकरान्तरविभ्रष्टभाजनगलितगन्धतैलसंसेकसुरभीकृतैकदेशा क्वचिद्वाचाटकुट्टिनीजननिबध्यमानहस्तविहस्तदासीजनरताश्रुतद्रविणवितरणापटुदुर्विधविटविविधानुतापमुखरितगृहाङ्गणा क्वचिद्विशजरतीजनानुनीयमानन-व्यकामुकमुखनिरीक्षणवृकदुद्यक्कुक्कुरपुच्छगुच्छनिरवधिविधूननिवारितशुण्डादंशसंघाता क्वचिन्निजगानरससमास्वादनलौल्यमुपसर्पत्सरीसृपसमुत्सारणकुशलकुशीलवाङ्गनाप्रपञ्चितषड्जानुवाददर्शितमेघपञ्जरशुकाभिरामसंजवना माण्डवीमनसेव भरतमतानुवर्तिना कमलषण्डेनेव वसुमदालोकदर्शितप्रहर्षेणामरकदम्बेनेव निरन्तरसुरतामोदिना दनुजकुलेनेव प्रकटितदेवनादरेण तरुणीगणेन विकीर्णा पश्य संदृश्यते वेशवाटी । यावदत्र प्रविशावः । प्रवेशं नाटयन्नग्रतोऽवलोक्य ।

वसानः काषायं किमपि वसनं मस्करकरः
किरन्वस्त्यालम्बिस्फुटवकुलमालापरिमलम् ।
अदन्तस्ताम्बूलं किमपि लडयन्मुद्रितमुखं
महातुन्दः कोऽसावभिपतति मन्दं यतिरितः ॥ ९१ ॥

एह्येनमालापयावः । उपसृत्य । नमोऽस्तु यतये निरस्तस्वधर्माय यते किं ब्रवीषि । अरे रे नराधम क इव लक्षितोऽस्मासु धर्मभ्रंश इति कथय तर्हि कतमो धर्मस्ताम्बूलचर्वणं नाम यतीनाम्। सोत्प्रासं किं ब्रवीषि अरे मूर्ख किमीश्वरमाराधयञ्जनो धर्माद्भ्रश्यतीति। यते कीदृशमीश्वराराधनं ताम्बूलचर्वणेन । किं ब्रवीषि । अरे शृणु कथ्यते । श्रूयते हि

येन केनाप्युपायेन यस्य कस्यापि देहिनः ।

संतोषं जनयेत्प्राज्ञस्तदेवेश्वरपूजनम् ॥ ९२ ॥

इति। अनन्तावदनाथाभिः सभक्तिभावाभिः समर्पितं ताम्बूलं तासामेव संतोषं जनयता मया स्वीकृतं न तु कामेन इति । साकूतस्मितम् । यत्ते पतितद्विजोऽसि कथं चर्वितुमर्हसि ताम्बूलम् । मन्दारशेखर किं ब्रवीषि । सखे किं पृच्छस्यननुकूलमेवास्य ताम्बूलचर्वणे पतितद्विजत्वमिति । यत्ते अनाकर्णितकेन किं ब्रवीषि । ताभिः स्वदन्तयन्त्रनिष्पिष्टमेव समर्प्यते मे ताम्बूलमिति । यत्ते न किं तासां मुखोच्छिष्टचर्वणमनाचारः । किं ब्रवीषि । अहो स्खलनपरिहार्यता धर्मतत्त्वानभिज्ञस्य ते मूर्खतायाः । अनाराधितगुरुचरण नरपशो शृणु तावत्कथयामि ।

रतिकाले मुखं स्त्रीणां शुद्धमाखेटके शुनः ॥

इति जागर्ति मनुस्मृतिरतो रतौ तदेतन्न दोषायेति । मन्दारशेखर किं ब्रवीषि । यतिनो रतिः कथं न दोषाय विशेषतस्तु विश्वस्तानामिति । यत्ते किं ब्रवीषि । अरे किं न जानासि सकलभूताभयदानमस्माकमाद्यो धर्म इति । यत्ते किमेतत्कथनेन प्रकृतोपयोगः । किं ब्रवीषि । शृणु वचनं मे समग्रम् ।

विश्लिष्टाः पतिभिर्निजैर्युवजनैर्दूरे समुत्सारिता
विश्वस्ताः समुपेक्षिता यदि पुनर्जाग्रद्वयैर्मादृशैः ।
स्मारक्रूरमाल्कामुकलतानिष्ठ्यूतषण्मास्वक-
व्रातावातविदीर्णजीर्णवपुषां तासां कुतो रक्षिता ॥ ९३ ॥

अनन्ता एता अस्मदेकतानजीविताः स्वाश्रमधर्मगोप्तृभिरस्माभिरत्यक्ता एवेति । कथं जीर्णवपुषस्ता विश्वस्ता यासु भवान् रज्यते । किं ब्रवीषि। कथं नु भङ्गुरजीर्णवपुषस्ता निवृत्तार्तवा इति। यत्ते तव कीदृशी रतिर्निवृत्तरजसि योषाजने । किं ब्रवीषि । स्थाने खलु विरजसंपन्थानमधितिष्ठतामस्माकमनुरागो निवृत्तरजसि योषाजन इति । सस्मितम् । यत्ते सत्यमेतत्

समालिङ्ग्याः स्वैरं विगतरशना निस्त्रणभयं
न विश्रम्भं मत्या रहसि यतिगुप्रपञ्चनिपात् ।

नहि भ्रूणे शङ्का विगतरजसोवीजविरहा-
त्कथं नो विश्वस्ताः कथय रमयन्तीह यतिनः ॥ ९४ ॥

मन्दारशेखर सोत्प्रासं किं ब्रवीषि ।

मिष्टान्नं गृहिणां गृहेषु सुलभं काषायवासोभृते-
र्विश्वस्ताः परिचारिकाः स्मरवशादन्तर्बहिर्धर्मतः ।
नो लौकायतिके मते स्थितिमतः स्वप्नेऽपि ते पापधी-
र्धिङ्मर्त्यानपरान्वृथा व्यसनिनो धन्यस्त्वमेवैककः ॥ ९५ ॥

यते सक्रोधं दण्डमुद्यम्य किं ब्रवीषि । अरे रे कुलटापुत्र कथमस्मानपि नास्तिकान् ब्रुवाणः कुम्भीपाके न पतिष्यसि । विमूढमते विलीनानर्थप्रयोजकमिथ्याज्ञानानामस्माकं कुतो नाम किल्बिषमिति । मन्दारशेखर किं ब्रवीषि । सखे पश्यास्य दण्डिनोऽपि चण्डित्वम् । हन्तुमिच्छत्यावां दण्डमुद्यम्य समुत्पतित इति । सखे किं न जानासि कामक्रोधावयुतसिद्धाविति । किं ब्रवीषि । सखे सर्वोऽप्ययं कलिविलास इति । सत्यमेतत् ।

नमो युगाय महते कलये कल्येऽञ्जलिम् ।
कामं कामं कलयते निष्कलासु यतिष्वपि ॥ ९६ ॥

अलमतिप्रसङ्गेन । एहि गच्छावः । पुरो गत्वा विलोक्य । अये समुत्पत्तिफलसाकल्यपात्रे सपदि मे नेत्रे । यतोऽसौ विलासवैजयन्ती निद्राविरामरमणीया संदृश्यते । इयं खलु

स्तोकोन्मीलितलोचनाम्बुजयुगं निर्गत्य लीलागृहा-
न्निद्राशेषवशात्समामपि समामाद्य स्खलन्ती भुवम् ।
संलग्नानुदयारुणस्य किरणानङ्गेऽङ्गरागभ्रमा-
दुन्मार्ष्टुं मिचयाञ्चलं कुचपरिभ्रष्टं समालम्बते ॥ ९७ ॥

किं च

व्यक्ताव्यक्तविमुक्तकञ्चुकमसुत्तुङ्गस्तनाभ्यन्तर-
व्यालोलामलतारहारनिकरैरस्याः सखे सम्भ्रवः ।

पश्याभ्युन्नतहेमशैलशिखरद्वन्द्वान्तरालोद्गम-
त्प्रालेयाम्बुसरित्प्रवाहलहरीलावण्यमाविष्कृतम् ॥ ९८॥
मन्दारशेखर किं ब्रवीषि । ममैवं प्रतिभाति
यूनां मोहमहाफलप्रसविनीं नाभ्यालवालोत्थितां
सेक्तुं लोमलतां मुखामृतनिधेर्लावण्यनामामृतम् ।
नेष्यन्सारणिकां विभज्य कृतवान् कूटद्वयं पार्श्वयोः
पञ्चेषुस्तदिदं पयोधरयुगं लोकाः समाचक्षते॥ ९९॥
इति । एहि तावदेनामालपयावः । उपसृत्य ।
प्रियोरःसंघर्षस्खलितपरिशिष्टं कुचतटी-
निषिक्तं हे मुग्धे घुसृणरसपत्राङ्कुररजः ।
प्रमार्ष्टुं ते यत्नः सपदि विफलो यत्र पुरुष-
प्रयत्नोऽभूत्पङ्गुः कथमिव करोत्वेतदबला ॥ १००॥
विलासवैजयन्ति सलज्जस्मितमंशुकाञ्चलमुदञ्चयन्ती किं ब्रवीषि । अयि वाग्विलासिन् किमेवं मूढोऽसि सम्यगाकलय मनसि कलहान्तरिताकृतं कोपं तत्र पुरुषप्रयत्नः पङ्गुर्वा जङ्घाल इति । मन्दारशेखर किं ब्रवीषि। सखे जितोऽसि त्वं वचसैवानया विशालदृशेति । सबहुमानम् ।
अहं जितोऽस्मीति किमङ्ग कथ्यते
विशालनेत्रावचसामुनाधुना ।
श्वसन्ति सेन्द्रा अपि ते ययामरा
अनेन साप्येकपदे सुधा जिता ॥ १०१॥
समीपमुपसृत्य करे गृहीत्वा । अयि विलासिनि मा संवृणु कुचकलशौ । किं ब्रवीषि । अयि विलासिन् मामातःपरं किं करोमि कथयेति । अयि वक्रवादरसिके मत्कृतमात्मनः कुचसंवरणनिषेधमन्यथा मन्यसे । किं ब्रवीषि। कुतोऽनयोर्निषिध्यते संवरणमिति । किं न जानासि उद्वृत्तौ पश्यतोहरावेतौ । अतो निषिध्यते संवरणम् । किं ब्रवीषि । किं तवापहृतमेताभ्यामिति । अयि किं कथयामि यन्मूलः संसारस्तदेव मे चित्तमपहृतं त्वाभ्याम् ।

किं ब्रवीषि । तर्हि किमेतौ करोमीति । करेऽर्पय ममैवैतौ । किं ब्रवीषि । त्वं वा किमेतौ करोषीति । यद्रोचते मे चित्ताय तदहं करोमि । मन्दारशेखर किं ब्रवीषि । सखे

अपहृतं मन इत्यमुना कुचौ
यदि निजेन करेण नियन्त्रितः ।
नियतमेव भवन्ति तदा तव
प्रमुषिताः सकलेन्द्रियवृत्तयः ॥ १०२ ॥

तदलमनेन साहसेन । एहि गच्छावः । स्थितगुप्तिरेव नौ भूयाद्धौम इति । सादरस्मितम् । सुन्दरि सत्यमेव सायमागच्छावः । संप्रति गच्छावः । अन्यतो गत्वावलोक्य सानन्दम् । सखे कृतमितरालोकनकुतूहलेन । सफलीक्रियेतामितो वसन्तकलिकायाः केशसंयमनकलाविलोकनेन विलोचने ।

केशान्वामकरावलम्बितशिखान्भूयो रणत्कङ्कणं
व्याधूयाथ कनिष्ठिकानखमुखेनाकुञ्चितान्याङ्गुलि ।
सीमन्तं विरचय्य तस्य करभेणोन्मृज्य पार्श्वद्वयं
तान्पश्चाद्युगपत्प्रणीय करयोर्युग्मेन बध्नात्यसौ ॥१०३॥

मन्दारशेखर किं ब्रवीषि । सखे पश्येदमन्यदपि चमत्कृतिस्थानम् ।

यथा यथा यो वलते भुजोऽस्या
उदञ्चितः संयमने कचानां ।
तथा तथा वल्गति काममेकः
स एव वक्षोरुह उत्पलाक्ष्याः ॥ १०४ ॥

इति । सखे एह्येनामालापयावः । उपसृत्य ।

स्नेहसंवर्धितान्वालान्दृढं बध्नासि सुन्दरि ।
करुणा हरिणाक्षीणां कुतः कठिनचेतसाम् ॥ १०५ ॥

वसन्तकलिके किं ब्रवीषि ।

संप्राप्तचिकुरभावः कचनिचयो वा युवा करे लग्नः ।
स्त्रीभिर्दृढं निबध्यः खलु नो चेत्परकलत्रमनुसरति ॥ १०६ ॥

इति । मन्दारशेखर किं ब्रवीषि । अस्त्येषां नियन्त्रणे निगूढं विज्ञानान्तरमिति । सादरम् । सखे किं तदुच्यताम् । किं ब्रवीषि । श्रृणु तावत्

कचभरः कुटिलो न निबध्यते
यदि तदा विपरीतरतोत्सवे ।
परिपतन्पुनरेष मनागपि
प्रियमुखं न ददाति निरीक्षितुम् ॥ १०७ ॥

इत्यनया निबध्यत इति । वसन्तकलिके सश्लाघं तर्जनीमाघूर्णयन्ती किं ब्रवीषि । साधु कुशाग्रमते मन्दारशेखर सम्यग्गृहीतं त्वया मे हृदयस्थितमिति । साभ्यसूयम् । अयि मुग्धे किमत्र मामसमर्थं समर्थयसे । इति तस्याः कुचाभिमुखं पद्मकोशहस्तं प्रसार्य । विलासिनि विलोक्यतां तदेतन्मयापि गृह्यते । सभ्रूभङ्गमङ्गानि पश्चादपहरन्ती किं ब्रवीषि । धूर्त किमत्र गृहीतुमिच्छसीति । सस्मितम् । सुन्दरि यद्गृहीतं मन्दारशेखरेण तदेव मयापि गृह्यते । सभर्त्सनं किं ब्रवीषि । किमत्र गृहीतं मन्दारशेखरेणेति । अयि कथमेतावतैव विस्मृतं भवत्या यत्स्वयमेवोक्तं हृदयस्थितमिति । किं ब्रवीषि । अये मदुक्तं सम्यगनाकलयतस्तव दुर्वारं जडत्वं चित्तस्येति । मन्दारशेखर किं ब्रवीषि । आयि विलासिनि किमेवमुच्यते त्वदुक्ताकलनेनैव जडत्वोपनतिश्चित्तस्य मे वयस्यस्येति । अयि सत्यमाह मन्दारशेखरः ।

हृन्मे जडं तव पयोधरमग्रमास्तां
को नो जडैः परिचयाज्जडतामुपैति ।
लाभो महानयमपि स्फुटवारिजात-
पत्रायताक्षि यदिदं प्रलयं न नीतम् ॥ १०८ ॥

वसन्तकलिके किं ब्रवीषि । किमिति जलधरमग्रं मनस्तवेति । मन्दारशेखर किं ब्रवीषि । सखि त्वयात्र किमाक्रम्यते वक्रवाक्सरणीरिति । वसन्तकलिके किं ब्रवीषि ।

वक्रताग्वक्रवाचैव विजेतव्यो न चान्यथा ।
वज्रसंतक्षणं कर्तुमवज्रेण न युज्यते ॥ १०९ ॥

इति । अस्तु सुन्दरि । स्वस्ति ते । गच्छावः । अन्यतो गत्वा विलोक्य । सखे पश्येममभ्यङ्गारम्भमहोत्सवमस्या मत्स्याङ्कपताकायाः ! इयं खलु

आश्रान्तं दृढयन्त्रणेन कुचयोरत्यक्तकाठिण्ययो-
रावद्धस्फुटमण्डलोन्नतिमितश्चोलं विमुच्योरसः ।
नीवीविच्छुरितं विधाय तममुं श्रामस्तनाच्छ्विनीं
वेणीं पाणिनखाञ्चलैः शिथिलयत्याक्रम्य पीठं पदा॥११०॥

मन्दारशेखर किं ब्रवीषि । सखे सम्यगुपदर्शितं भवता । इतश्च

आवर्त्य कण्ठं सिचयेन सम्य-
गाबध्य वक्षोरुहकुम्भयुग्मम् ।
कासौ करालम्बिततैलपात्रा
मन्दं समासीदति सुन्दरीं ताम् ॥ १११ ॥

इति । सखे सेयमस्या वयस्या कान्तिमती । पश्य पश्य
अस्याः पीठोपविष्टाया अभ्यङ्गं वितनोत्यसौ ।
ललच्छ्रोणि चलद्दोणि नटद्गुरुपयोधरम् ॥ ११२ ॥

एहि कान्तिमतीं प्रथममालापयावः । उपसृत्य । अयि कान्तिमति

नटतु कुचभरोऽस्याः केशहस्तोऽपि तन्व्याः
समुचितमिदमेतौ वन्धनाद्विप्रमुक्तौ ।
तव तु कुचभरोऽयं गाढबद्धो नितान्तं
नटति किमिति बाले ब्रूहि तन्न प्रतीमः ॥ ११३ ॥

मत्स्याङ्कपताके सस्मितं किं ब्रवीषि । अयि रसिक कुतोऽभयावसरे नाव्यावसरः कुचभारस्य । किं स्वमौ भयाद्विरत इति । अये किमस्तीदानीं भयनिदानमेनस्य । किं ब्रवीषि । किमन्यत् । नखरायुधविलोकनात्पृथुकस्य भयनिदानमेनस्येति । कोऽसावत्र नखरायुधः ! सोत्प्रासं किं ब्रवीषि । किं

कथयामि भवानात्मानमेव तादृशं न जानातीति । मन्दारशेखर किं ब्रवीषि । सखे युक्तमाह मत्स्याङ्कपताका ।

रतिशिथिलितकञ्चुकं विदित्वा
खरनखशस्त्रमुखैर्विदारयन्तम् ।
अकरुणमवलोक्य किं भवन्तं
कुचभर एष भवन्न भीतिपात्रम् ॥ ११४ ॥

इति । मत्स्याङ्कपताके किं ब्रवीषि । सखि कान्तिमति तमेनं निजाङ्गोद्वेगकारिणं विप्रासिनं नय दृढं बध्वा स्ववक्षोजामिति । मन्दारशेखर किं ब्रवीषि । सखे भवान्दिष्टया वर्धते । यदियं मत्स्याङ्कपताका कुचाभ्यां सह भवन्तमाबद्धुमादिशति कान्तिमतीमिति । सहर्षस्मितम् ।

यद्येवमनया बद्धो मुक्ताहारस्तदा सखे ।
वसामि कुचभारेऽस्याः स्पृहणीयसुखास्पदे ॥ ११५ ॥

किं ब्रवीषि । सत्यमुक्तम् । मुक्ताहारतापत्तिमन्तरेण कथमस्याः कुचतटे घटेत चिरसंवास इति । मत्स्याङ्कपताके सोत्प्रासं किं ब्रवीषि । अहो मानोरथिकमोदकैः कुक्षिभरिता कन्दर्पविलासमन्दारशेखरयोः । यौ पुनर्बन्धनेन कुचसादृश्यं प्रापयेति मयोक्तमन्यथामन्वानावकाण्डे निर्भरं प्रमोदमनुभवत इति । सहर्षम् । अयि सरलहृदये एवमप्यक्षतो मनोरथः । श्रूयतां तथा हि

सादृश्यमञ्जाक्षि समानधर्मता
वक्षोजधर्मस्त्वबलाहृदि स्थितिः ।
तां चेदियं मां गमयत्यसंशयं
तेनैव लब्धं खलु वाञ्छितं मया ॥ ११६ ॥

मन्दारशेखर किं ब्रवीषि । अपि सोऽयं बध्यतां नाम भवतीनामङ्गोद्वेगकारी कन्दर्पविलासः । किं पुनरपराद्धममुना कुचभारेण य एवं निर्दयमाबद्ध इति । सखे ममैवं प्रतिभाति ।

स्वाङ्गं कृशाङ्कशतरं वहिभिर्निनान्त-

मारकान्तमेव जलजाक्षदृशो ऽवलम्बम् ।
पुंभावसंभ्रमवशात्कुचभार एष
आकम्पयत्यनितरां तत एव वक्षः ॥ ११७ ॥

मन्दारशेखर किं ब्रवीषि । सखे एवमिदं न सन्देह इति । एहि पुनरागमिष्यावः । संप्रति मा भूदावाभ्याममुष्या अभ्यङ्गान्तरायः । कतिचय पदानि गत्वा श्रुतिमभिनीय । अये मणिमालामन्दिरोदरे कीरसारिकयोः संलाप इव श्रूयते । एहि तत्र गत्वा क्षणमात्रं मनो विनोदयिष्यावः । गत्वा विलोक्य सहर्षम् । अये आलापमाध्र्याक्रान्तोऽस्मि । नेयं सारिका किं नु कीरमध्यापयति कापि नितम्बिनी । इयं खलु

कूर्पासं दधती तुषारधवलं न्यग्भूततुङ्गस्तनं
श्यामिश्रद्युतिबन्धुरं तनुरुचा चेलं कुसुम्भारुणम् ।
हैमात्पञ्जरतो निचोलमधुना प्रोत्सारयन्ती शनैः
कीरं चारुतरप्रबन्धशकलान्यध्यापयत्यङ्गना ॥ ११८ ॥

किं ब्रवीषि । कुतोऽस्यां प्रयासन्नायां सत्रास इव समुत्पतति पत्ररथ इति । शृणु सखे समुत्पतनकारणमेतस्य ।

सङ्कुमदसारपङ्किलवक्षोजोद्दान्तसौरभतरङ्गान् ।
निकिरन्ती परितोऽसावुपसर्पति तद्बिभेति कीरशिशुः ॥ ११९ ॥

यावदेनां मणिमालामुखेनावगच्छावः । परिक्रम्यावलोक्य । सखे साप्यत्रैव वर्तते । एहि पृच्छावः । मणिमाले केयमनङ्गलीलेव शरीरवती नितम्बवती । किं ब्रवीषि । अयि विलासिन् किमुत्तरं ते प्रयच्छामि । स्वयं गृह्णन्नेव नामास्याः पुनः पृच्छसीति । किमस्या नामधेयमनङ्गलीला । किं ब्रवीषि । किमियं नितान्तापनीतबाल्यभावा नाद्यापि त्वया प्रत्यभिज्ञायते मे कनीयसीति । अपि नामेयं कनीयसी भवत्याः । सोपालम्भं किं ब्रवीषि । अयि बहुरसिकवल्लभानां युष्माकं कुतो नामास्मादृशयोषितां प्रत्यभिज्ञेति । सुन्दरि नास्माकमयं दोषःकिन्तु तारुण्यवैभवोपरुद्धानामङ्गानामेव ते भगिन्याः । तथा हि

·

स्थातुं नालमुरोजयोश्च हृदयं मध्यो न संलक्ष्यते
रामालिस्थितितोऽप्यसौ कृतमुखैरुन्नीयते वा न वा ।
कर्णाभ्यर्णमुपागते अपि पुनर्नेत्रे न विश्राम्यतो
ज्ञेयासौ वचसैव ते त्ववयवैर्न प्रत्यभिज्ञा मम ॥ १२० ॥

मन्दारशेखरमालोक्य किं ब्रवीषि । किमेनां भवानपि न जानातीति । मन्दारशेखर किं ब्रवीषि । न हि न हि सख्युरेव मनीषासरणिमवगाहते ममापि मतिः । यतोऽस्याः

वक्षः पीनकुचौ कचान्कुटिलता वाचं सुधामाधुरी
वैपुल्यं नयनेऽवलग्नमणिमा दन्ताम्बरं शोणिमा ।
श्रोणीबिम्बममुं नितम्बमहिमा क्षोणीधरस्यावृणो-
त्ज्ञेयासौ तरुणी पुरा परिचितैरङ्गैर्गिरा वा कथम् ॥ १२१ ॥

इति । सानुस्मरणम् । सखे पुरा दृष्टाया अमुष्याः

प्रतिपदस्खलनं गमने स्थितं
चलविशालदृशः परिभाषणे ।

मन्दारशेखर किं ब्रवीषि ।

तदधुनापि समं सविलासता
मधुरता लसता तु विशिष्यते ॥ १२२ ॥

इति । कुतोऽसौ करतिरोहितवदना मदनतुरंगमध्यापयति कुरङ्गाक्षी । मन्दारशेखर किं ब्रवीषि । सखे ममैवं प्रतिभाति

आलोकते यदि रदच्छदनं मदीय-
मास्यन्न एष मम नानुवदेद्वचांसि ।
इत्यङ्गुलिव्यवहितेन मुखेन कीर-
मध्यापयत्यधरवञ्चितबिम्बशोभा ॥ १२३ ॥

इति । मणिमाले अनङ्गलीलामालोक्य किं ब्रवीषि । वत्से किमेनं न प्रत्यभिजानासि कन्दर्पविलासम् ।

आ कौमारं यदङ्के त्वं भृङ्गीव कमलोदरे ।
लालितास्य मितापाङ्गि सोऽयं बाल्यसखस्तव ॥ १२४ ॥

इति । मन्दारशेखर किं ब्रवीषि । सखे किमर्थमियं सहुंकारमुखविधूननेनैव प्रयच्छति प्रतिवचनमेतस्य न तु कण्ठत इति । सखे किमिदं मामपूर्वं प-

च्छसि । किं न जानासि सर्वत्र तारुण्यगर्वितानामयमेव पन्था मत्तकाशि-
नीनाम् । सावधीरणं किं ब्रवीषि ।

लज्जा यत्र निवर्तयत्यपि दृशः स्वच्छन्दसंचारतः
स्वाधीनापि निरुध्यतेऽलसतया वाणी रसस्यन्दिनी ।
स्पर्शेऽपि प्रथमं प्रियस्य भजते मूर्तिर्यवासोपमां
तादृग्यौवनसंश्रयेण धिगमूर्मायन्ति मुग्धाः स्त्रियः ॥ १२५ ॥

इति । किमेवं ब्रूषे ।

युवरसिकानुद्विग्नं दासीकुरुते यदेव तारुण्यम् ।
तद्वृद्धौ कथय सखे कथं न माद्यन्ति सुन्दर्यः ॥ १२६ ॥

अनङ्गलीलामालोक्य सस्मितं किं ब्रवीषि । अयि मिथ्योदरि शृणु मया
कथ्यते पथ्यं वचः ।

अधिरुह्य पुरा तनुं यदीयां
गमितास्ते दिवसा यदा शिशुस्त्वम् ।
अनृणा भव भीरु तं कुचौ ते
सकृदारोप्य हृतेभकुम्भदम्भौ ॥ १२७ ॥

अनङ्गलीले किं ब्रवीषि । का भवन्तमाकारितवती धर्मागमसरणिप्रदर्श-
नायेति । मन्दारशेखर किं ब्रवीषि । किं तर्हि वारनारीकुलोचितमर्था-
गममार्गमुपदर्शयामीति । अनङ्गलीले सक्रोधं किं ब्रवीषि । अलमलमर्थे-
न वा धर्मेण वा गच्छ गच्छ यथागतं जोषमिति । मन्दारशेखर सस्मितं
किं ब्रवीषि । कान्ते तर्हि किं ते कामेन भवितव्यम् । अथ वा किं ते कामेन न-
नु पूर्णकामैव भवतीति । सखे किमुच्यते पूर्णकामेति वपुरेवास्याः पूर्णका-
मम् । तथा हि

मन्मथवृत्तपयोधरमतनुनितम्बं प्रसूनशरहासम् ।
अम्बुरुहाम्बकवदनं काममनोज्ञं वपुस्तन्व्याः ॥ १२८ ॥

किं ब्रवीषि । किं त्वेषा त्वत्सकाशान्मोक्षमपेक्षते तन्वङ्गीति । सस्मितम् ।
सखे शृणु कथयामि ।

तिष्ठतु मोक्षः श्रौतः किं तेनाकामिलोकसुलभेन ।
येन कृतार्थः कामस्तन्वीनीवीमोक्षमीहते तन्वी ॥ १२९ ॥

मणिमाले किं ब्रवीषि । कथं सुलभोऽस्माकं नीवीमोक्षो विना भवतां नी-

वीमोक्षम् । विशेषतो मे भगिन्याः सर्वाकारौदार्यशालिन्या इति । सखि सत्यमाह भवती ।

कर्णातिलङ्घिनयनं सुरभिस्तनुस्तु
बाहुद्वयं मथितकल्पलतावलेपम् ।
एषा स्वयं सुरमणी तत एव तन्व्यां
सर्वेऽर्थिनः प्रकटयन्त्यनुरागमस्याम् ॥ १३० ॥

मन्दारशेखर किं ब्रवीषि । यद्येवमसौ क्षमेत युगपदेव बहूनर्थिनः कृतार्थीकर्तुमिति । अनङ्गलीले सभ्रूभङ्गं किं ब्रवीषि । मणिमाले न रोचन्तेऽस्य मे साकूतभाषणानि । रोचन्ते चेत्तिष्ठ त्वम् । अहं गच्छामीति । विलोक्य सविषादम् । सखे चलितैव सेयं कोपना । व्यामेनास्याः पन्थानं रुन्धन् । अयि विलासिनि

तिष्ठतु मयि कोपस्त्वयि दर्शितपक्षपातमनवरतम् ।
वचनानुसारिणं ते शुकमपि हित्वा क्व नु व्रजसि ॥ १३१ ॥

भवतु तावदतिमानमानामेनां पश्चादागत्यानुनयिष्याव: ॥ कतिपयपदानि गत्वा निरूप्य । पश्य सखे शृङ्गारवल्लीगृहाङ्गणे

जपारक्तचेलस्फुरत्तन्तुजाल-
प्रसर्पन्नितम्बोरुकान्तिप्ररोहैः ।
हरन्ती दृशं पश्यतां कापि बाला
कुचौ कञ्चुकेनाद्य बध्नाति बाढम् ॥ १३२ ॥

असौ

एकस्मिन्नतकण्ठनालमबला संधार्य कूर्पासकं
तद्भिन्ने समुदञ्चितस्तनभरं बाहौ समारोप्य तम् ।
कक्षाभ्यामथ कञ्चुकाञ्चलयुगं व्याकृष्य संयोज्य च
ग्रन्थिं तत्र ददाति पश्य वदने धृत्वोत्तरीयाञ्चलम् ॥ १३३ ॥

यावदेनां शृङ्गारवल्लीमुखेनावगच्छावः । परिक्रम्यावलोक्य सहर्षम् । अव्यवधानापातिनी मे भागधेयपरंपरा । यतोऽसावुपकण्ठे

प्रत्यग्राभ्यञ्जनाप्लावमसृणार्द्रशिरोरुहान् ।
विधुन्वन्ती नतग्रीवमातपं सैव सेवते ॥ १३४ ॥

अस्याः

रुन्धन्तं वदनाम्बुजं कचतमःप्राग्भारमुच्चावचं
हस्ताम्भोजयुगं धुनोति सहजज्ञातेयहार्दान्मुहुः ।
तद्दृष्ट्वा कुचपङ्कजातमुकुलौ हर्षोत्परं नृत्यतः
को नु स्वीयकृतावमानमहितं दृष्ट्वा न संतुष्यति ॥ १३९ ॥

उपसृत्य । प्रिये शृङ्गारवाल्लि अपि कुशलं ते तारुण्यस्य । मन्दारशेखर किं ब्रवीषि । सखे किमेनामनादृत्य त्वदीयकुशलानुयोगोऽस्यास्तारुण्यमवलम्ब्य इति । सखे उपजीव्यकुशलमूलं खलूपजीविनः कुशलम् । अतस्तारुण्यकुशलेऽस्याः कुशलमर्थसिद्धमिति तथा पृच्छामि । किं ब्रवीषि । किमुपजीव्यमम्बुजदृशां तारुण्यमिति । सखे न हि सर्वासां किन्तु वेशकुशेशयदृशामेव । कुलाङ्गनानां तु तदेतत्केवलमलंकारः । किं ब्रवीषि । कथमवगतं भवता वधूपजीव्यं तारुण्यमिति । शृणु तावत्

कुचे क्षितिधरश्रियं कुवलयाधिपत्यं दृशोः
कचेषु घनसंपदं पदयुगेऽथ पद्मोन्नतिम् ।
ददाति वदने पुनः सकलराजरम्योदयं
न पङ्कजदृशां सखे किमिव यौवनेनार्पितम् ॥ १३६ ॥

इत्यहं तथावगच्छामि । किं ब्रवीषि । सखे सर्वमिदं कुलवधूसाधारणं तत्कथमेतत्प्रतिपादनेन केवलगणिकोपजीव्यता तारुण्यस्येति । सखे न खल्वेतावदेव भवादृशौदार्यपयति धनमक्षय्यमुपभोगयोग्यं च । सावज्ञं किं ब्रवीषि । सखे छलेन भवान्किं मां मूढविटं समर्थयते ।

ते दत्वा द्रविणं तासां तामु मूढा व्रजन्ति हि ॥

इति मदनतन्त्रेषु शतशो निशम्याप्येवं ब्रवीषीति । सानुनयम् । सखे क्षन्तव्यमिदं सौहार्देन यदृच्छागतं मे वाचास्खलनम् । किं ब्रविषि । सखे स्वापगमक्षणापनीतसौभाग्यसर्वस्वं तारुण्यमाश्रित्य मुधैवमाद्यन्त्यमूर्वारस्त्रिय इति । सखे मन्ये तव वचस्यत्र नानर्थकं वर्णमकमपि ।

आ यौवनं न गणयन्ति नितान्तशौण्डाः
संपन्नरूपविभवान्धनिनोऽपि यूनः ।
वारस्त्रियोऽथ जरसा परिभूतदेहाः
संवाहयन्ति चरणौ तरुणीजनानाम् ॥ १३७ ॥

शृङ्गारवल्लि किं ब्रवीषि । अयि कन्दर्पविलास किमत्रागतस्य तवास्मत्प-

रिरम्भ एव फलमित्यर्धोक्ते सलज्जस्मितं किं ब्रवीषि । नहि नह्युपालम्भ इ-ति । सहर्षस्मितम् । सुन्दरि सत्यं तद्यत्प्रथममाह भवती ।

सकृदाचरितः सरोजपाणेः
परिरम्भस्तव गोचरैः स्मरेषोः ।
अपराद्धपृषत्कमञ्जवाणं
कुरुते यः स कथं भवेन्न लाभः ॥ १३८ ॥

किं ब्रवीषि । अपूर्वोऽयं द्वीपिनीदुग्धलाभ इव मद्गृहागमः कन्दर्पविलास-स्येति । मन्दारशेखर किं ब्रवीषि । अलमबले वक्रोक्त्या ते प्रियप्रेम्णा गर्विताया: । कथय केयमङ्गणाङ्कस्था हरिणाङ्कमुखीति । शृङ्गारवल्लि किं ब्रवीषि । सेयं मदीया भगिनीति । मन्दारशेखर किं ब्रवीषि । सुन्द-रि विदितमेव स्त्रीत्वनियतमेतस्या भगिनीत्वम् । किमेतत्कथनेन । क-थय कथमेषा त्वदीयेति । शृङ्गारवल्लि किं ब्रवीषि । अयि मन्दारशे-खर अलं ते परिहासेन । जानीहि ममेमां सहोदरीमिति । सहर्षम् । सुत-नु ममेदं लाभाल्लाभान्तरमापतितम् । यतस्त्वामेकां द्रष्टुमागतस्य ममात्रे-दानीं त्वत्सहोदरीदर्शनलाभः । कथय किमस्या नामधेयम् । किं ब्र-वीषि । सुमनोङ्गपालीति । सशिरःकम्पम् । सत्यमियं यथार्थनामधेया ते सहोदरी ।

वैश्रवणलोलनयना कालकचा जम्भदम्भहारिकुचा ।
मध्ये स्वयं कृशानुः स्फुटमयि सुमनोङ्गपालीयम् ॥ १३९ ॥

सुमनोङ्गपालीमालोक्य सस्मितम् ।

तथाभूते कामप्रधनसमयोत्थव्यतिकरे-
ऽप्यभग्नो यो बाले जयति कवचानावृततनुः ।
तमेनं किं तूष्णीं निचुलयसि वक्षोरुहभरं
कुतो भीरस्यायं नरपरिवृढैरर्पितकरः ॥ १४० ॥

सुमनोङ्गपालि सस्मितं किं ब्रवीषि ।

नृवरैरर्पितकरो गुरुः सत्यं पयोधरः ।
कृपणं बाधते मध्यमत एव निबध्यते ॥ १४१ ॥

न तु भीत इति मयासंगोप्यत इति । मन्दारशेखर किं ब्रवीषि । अये कथमियमावयोः प्रथमेऽपि दर्शने चिरकृतसंस्तवेव निर्लज्जमेव व्याह-

रति हरिणाक्षीति । सुमनोऽङ्गपालि किं ब्रवीषि ।

पथि सुभगनिरङ्कुशेऽप्युषित्वा
ह्रियमपि किं समुपैमि वाञ्छितघ्नीम् ।
करधृतकरदीपकस्तमिस्रं
गणयति किं कथय त्वमेव लोकः ॥ १४२ ॥

मन्दारशेखर किं ब्रवीषि । सुन्दरि कथय कथं निरङ्कुशा वः पदवीति । सुमनोऽङ्गपालि किं ब्रवीषि । शृणु तावदवहितः ।

परीहासः स्वैरं प्रसरति मनो यत्र रसिके
प्रसक्तं स प्राप्यो गमनमनिरुद्धं क्वचिदपि ।
अहार्यः संलापः सततमनुभावोऽपि विविधो
न निर्देश्यः सेयं जयति खलु गाणिक्यसरणिः ॥ १४३ ॥

इति । अयि सुदति तदपि वद कथं लज्जा वाञ्छितविरोधिनी युवतीनाम् । किं ब्रवीषि । अयि सरसहृदय न वयमपत्रपायाः प्रतिवेशिन्योऽपि तत्कथं कथयामस्तत्त्वम् । लज्जाजन्मभूमयस्तु कुलकामिन्यस्ता एव प्रष्टव्या इति । शृङ्गारवल्लि किं ब्रवीषि ।

किं वक्तव्यं लज्जा कान्तानां हन्त वाञ्छितघ्नीति ।
चित्रार्पितमपि दयितं द्रष्टुं प्रददाति नैव या सम्यक् ॥ १४४ ॥

इति । मन्दारशेखर किं ब्रवीषि । सत्यमपत्रपेति वाञ्छितघ्नी कुलाङ्गनानाम् । युष्माकं तु माता नाम दग्धमुखी पिशाचिकेति । (परिवृत्यावलोक्य) । सखे कथमावामतिनिष्ठुरं निर्भर्त्सयन्तीतः समापतति पलिक्नी । पश्य पश्य

वलिभरकलदेहा सृक्कनिष्ठ्यूतवीटी-
रसपरिचयशोणस्यन्दिनी शारगल्ला ।
पलितधवलशीर्णैः कुन्तलैः कीर्णवक्त्रा
मलिनवसननीवीक्लृप्तताम्बूलभस्त्रा ॥ १४५ ॥

शृङ्गारवल्लि किं ब्रवीषि । अयि किमेनां न जानामि मामकजननीमर्थतृष्णामिति । मन्दारशेखर किं ब्रवीषि । सखे कन्दर्पविलास

माता स्थिता चेत्पलिताङ्गयष्टि-
र्वेश्याजनानां भवनाङ्गणेषु ।
सा मृत्युरूपा हि महाविटानां
श्रीचन्दनाद्रावुरगीव जाता ॥ १४६ ॥

इति वदन्ति मदनतन्त्रविदः । अतोऽस्या वेश्यामातुः समीपतोऽस्थातव्यम् । एहि गच्छाव इति । सोद्वेगम् । सखे त्वमितः क्व गन्तुमुत्सहसे । संनिहितैव सेयं वृकमुखी पलिक्नी । अर्थतृष्णे मन्दारशेखरं प्रति सक्रोधं किं ब्रवीषि । अरे मम दुहितुः समुचितं धनमदत्वा क्वेदानीं गन्तुमिच्छसीति । मन्दारशेखर किं ब्रवीषि । वृद्धे विवेकगन्धविधुरे

नास्वादितोऽधररसो दुहितुस्तवास्या
नालिङ्गितः कुचभरोऽपि न लब्धमन्यत् ।
किं याचसे सपदि मां वसु भूरि भूयः
किं न्वस्ति मय्युपनिधिः कथय त्वदीयः ॥ १४७ ॥

इति । पुनरेषा किं ब्रूते । रे बालिशाधम किं न जानासि

वीक्षणभाषणकुचभरपरिरम्भणमोहनेषु मे दुहितुः ।
पङ्क्त्या हतपङ्क्तिशती दीनाराणां क्रमात्पणः क्लृप्तः ॥ १४८ ॥

अतः संभाषणोचितं प्रयच्छ दुहितुर्मे द्रव्यमिति । सावधीरणम् । धिग्वयो रूपं च जीनजननीपिशाचिकावशवशंवदानां रूपाजीवराजीवदृशाम् । यदेताभिः

स्थेयं कृच्छ्रमुदग्रयौवनभरेऽप्यादानशौण्डागमं
दुष्प्रापेष्टजनोपगूहनरसे धिग्ब्रह्मचर्यव्रते ।
संप्राप्यो विरमोऽपि भूरिविभवो लब्धो न चेत्तादृशः
कान्तं काननकौमुदीसमदशं नेयं मुधा यौवनम् ॥ १४९ ॥

मन्दारशेखर किं ब्रवीषि ।

तद्वरं कुलकामिन्यो मतो वाप्यमतोऽथवा ।
यामामभिमतं काले प्रत्यासन्नः पतिः सखे ॥ १५० ॥

इति । अर्थतृष्णे सभ्रूभङ्गं संकुचिताधरोष्ठं च कराञ्चलकृतचुबुकानोदना मन्दारशेखरं प्रति किं ब्रवीषि । अरे रे पराङ्गनाविहारदास दमीपुत्र रङ्काधम धूर्तविटहतक अलमलं बहुभाषितैः । गच्छ द्राविगं यदीच्छसि जीवितुमिति । मन्दारशेखर सक्रोधहुंकारं किं ब्रवीषि । शृणु वराकि वराङ्गजीवे शृङ्गारवल्लीप्रणयानुरोधेन क्षन्तव्योऽयं तवापराधः । यदीतः परं कटु ब्रूयास्तदा त्वां नियतमेव गन्धानभूतिविधुरां विधास्यति मन्दारशेखरः । गच्छेतो जोषामीति । सखे कुतोऽद्यापि शृङ्गारवल्ल्याः प्रणयानु-

रोधः कठोरहृदयायाः। शृङ्गारवल्लि सविषादवैलक्ष्यं किं ब्रवीषि। अयि सरसहृदय कथमहं कठोरहृदयेति। आयि कुटिलहृदये कथय जीनजननीकपटविकटाच्छभल्लाङ्गना गले मन्दारशेखरमाबध्य स्वच्छन्दमात्मानं विनोदयन्ती न कथं भवती कठोरहृदया। आपि च

अपि मृदितमृणालीपेशलेष्वङ्गकेषु
स्फुरति हृदयजन्मा कर्कशो यत्कुचस्ते।
हृदयमतिकठोरं तेन मन्ये त्वदीयं
फलगुणबलमेयो हेतुनिष्ठो गुणो हि॥ १९१॥

अर्थतृष्णे मां प्रति किं ब्रवीषि। अरे रे वितर दुहितुर्मे परिरम्भसंभावितं द्रव्यमिति। अयि जरति केनात्रानुभूतो दुहितुस्ते परिरम्भः। कं त्वं याचसे द्रविणं च। सक्रोधं किं ब्रवीषि। अरे रे प्रतारक स्वकृतमेव दुहितुर्मे परिम्भमपलपसि। कृतं प्रतारणया। प्रयच्छ मे द्रविणमिति। अये केनाक्तं ते मयेयमालिङ्गिता तन्वङ्गीति मिथ्यावादिना। किं ब्रवीषि। अरे मूढ अन्यकृतमुपदेशमुपेक्षेत तदा खल्वियमर्थतृष्णा यदि पुनः स्वतोऽवगन्तुमकुशला। अलमलं विलम्बेन। प्रयच्छ मे द्राविणमिति। सत्यान्वत्वादम्। अयि सत्यमियं मया न समालिङ्गिता। सोत्प्रासं किं ब्रवीषि। कथमन्यथा वगतं मे दुहितर्भरता कुचकार्कश्यमिति। मन्दारशेखर सरोपं किं ब्रवीषि। आयि दुर्भगे असमंसगतप्रलापेन। अपसर परस्तादिति। अर्थतृष्णे किं ब्रवीषि। भवतु रे हताश अहं दुर्भगैव शोभनोऽस्तु मगस्त्वैव जनन्यायतस्त्वमेवंविधोऽसि निर्गलित इति। मन्दारशेखर किं ब्रवीषि। सखे किमनां ब्रवीम्यनर्थज्ञामिति। अर्थतृष्णे किं ब्रवीषि। अरे वराक किं मामदृष्टधनां मन्यसे। शृणु। तारुण्यदशावस्थितया मया

संपादितं बहु धनं वदान्यधनिसेवया।
निष्कामिताः पादघातैस्त्वादृशा रङ्कपल्लवाः॥ १९२॥

अद्यापि तदेव भुज्यते वराकैभिरेताभिः। न समार्जितं वराटकशकलमपीति। शृङ्गारवल्लि किं ब्रवीषि। विरम मातः। किमेतेन गृहागतरसिकजनहृदयोद्वेजनेन। गच्छ गच्छ गृहाभ्यन्तरमिति। अर्थतृष्णे सक्रोधं दन्तैर्दन्तान्निष्पीड्य करमुद्ञ्चयन्ती किं ब्रवीषि। आयि कुलधर्मपरित्यागपातकिनि इसस्यन्ति जांपं तिष्ठ न चेदास्यामि कपोलचपेटिकाम्।

कार्या प्रेमविडम्बना प्रथमतो नानाविधैर्विभ्रमै-
र्व्यक्तिं नेयमथ क्रमेण हृदयाकूतं विलक्षस्मितैः ।
यात्राद्युत्सवकैतवेन कमनाद्यद्यद्विलग्नं करे
तत्तद्ग्राह्यमशेषतो वसु पुनर्यावत्स निःस्वो भवेत् ॥ १९३ ॥

एवं कुर्वाणाः सुखमविरतं भुञ्जन्ते वारस्त्रियः । त्वं पुनरनीदृशी चलिते वयसि किमिह मृत्कर्मरांका भिक्षामटसीति । शृङ्गारवल्लि सक्रोधभर्त्सनं किं ब्रवीषि ! शृणु जरामुषितविवेके मातः

मृगदंशकवद्दृष्टे विलासिनि गृहागते ।
प्रभूतधनलाभस्ते भवतीत्यस्ति निश्चयः ॥ १९४ ॥

इति । मन्दारशेखर किं ब्रवीषि । अर्थतृष्णे लब्धेऽपि धने कस्ते लाभो जरद्गणिकायाः ।

वासो हन्त धृतोज्झितं युवतिभिः फेलाथवा भिस्सटा
भोज्याङ्गं परिकर्मगन्धविधुरं शय्या परं रल्लकः ।
भूषा रीतिविनिर्मिता न समये स्वापः श्ववृत्त्याश्रया-
त्किं तृष्णावशमेत्य ताम्यसि मुधा भोगाय नार्थस्तव॥१९५॥

इति । सखे मन्दारशेखर एहि गच्छावः । मात्रा सह स्वैरमियं रमतां शृङ्गारवल्ली । शृङ्गारवल्लि सविषादवैलक्ष्यं किं ब्रवीषि । अयि सरसहृदय मातृमनाथं वेश्याजनं कामपरतन्त्रं विजानन्नपि किमर्थमेवं कुप्यति भवान्मह्यमिति । सहासस्मितम् । सुन्दरि नानत्वं त्वं कामपरतन्त्रेति ।

ध्रुवं शम्भ्वायत्तं जगति सकलं शस्त्रमबले
स्त्रियाः कामास्त्रत्वात्तव तु तदधीनत्वमुचितम् ।
इदं तु परनाश्चर्यमस्त्रीभूतायां त्वयि
असंलग्ना देहे जनयसि परेषामनुशयं
विलग्ना त्वानन्दं निरवधि किमन्तः कलयसि ॥ १९६ ॥

अथ वा काममेव मन्ये त्वत्परतन्त्रं । तथा हि

वदनरदनवामोहासपाण्याक्षिलीला
हृतनिजशरसारः पञ्चबाणो भवत्या ।
अपि भटगुरगांस्त्वं किङ्करीकृत्य वाचां
चरति पुनरगृह्यस्त्वद्विलग्नानुकारी ॥ १९७ ॥

तिष्ठ पश्चादागमिष्यावः । अग्रतो गत्वा विलोक्य । वयस्य मदनमञ्जुलासदनमिदं क्षणमात्रमत्र विश्रम्य गच्छावः। इति नाट्येन प्रविश्य वामतोऽवलोक्य ।

कनकासने निषण्णा पश्यन्ती मुखसरोजमादर्शे ।
अलिके कनकनिभाङ्गी मृगमदपङ्केन तिलकमातनुते ॥ १९८॥

पश्चान्निभृतमुपसृत्य । अयि मदनमञ्जुले कुशलमस्तु ते तिलककल्पनावैदग्ध्यस्य । ससंभ्रमं मुखमपवर्त्य किं ब्रवीषि । सखे चोर इव समेत्य किं मां प्रतारयसीति । सस्मितम् । सुतनु को विशेषश्चोराज्जारस्य

यस्मिञ्जाग्रति निर्भयैव जनता सत्रासहेतुर्नृपो
यः कालस्त्वकुतोभयस्तनुभृतां सोऽयं महाभीषणः ।
यः पन्थाजनसेवितः स भजते चोरस्य कान्तारतां
जारस्यापि ————————

मन्दारशेखर किं ब्रवीषि । सखे किमेवं ब्रवीषि

धनागमापगमयोर्भेदोऽपि भूयांस्तयोः ॥ १९९ ॥

इति । क्षणमात्रं निर्वर्ण्य ।

ज्योत्स्नापानधृतव्रते द्विजगणे दत्वा वसूनां चयं
हुत्वा वन्हिमुखे निजामपि तनुं भूयः परिक्रम्य गां ।
कृत्वा विष्णुपदावलम्बमपि यो हातुं न शक्यः प्रिये
सोऽयं त्वन्मुखतामुपेत्य शशिना मुक्तः कलङ्कोऽधुना॥१६०॥

सत्यमयि समाश्रितं जनमाश्रितकलङ्कमातनोति योषाजनः । यतः

आदर्शदर्शितसमग्रकलाममुष्मौ
त्वद्वक्त्रचन्द्रमसि शोणसरोजपाणे ।
वैधेयदत्तशशभृत्तुलनाकलङ्के-
ऽप्यङ्कान्तरं कलयसे तिलकच्छलेन ॥ २६१ ॥

मन्दारशेखर साकूतस्मितं किं ब्रवीषि ।

युक्तमेव खलु वारयोषितां
सन्ततेः सुमुखतामुपागते ।
व्याकिरद्गुणगणं कलानिधा-
वङ्कदानमयि पङ्कजानने ॥ १६२ ॥

मदनमञ्जुले किं ब्रवीषि। मन्दारशेखर कृतं ते वक्रोक्तिकलनाचातुर्येण ।

मत्पर्यङ्कोऽयमलंक्रियतां युवाभ्यामासनपरिग्रहेण क्षणमात्रं जिगमिषायाः परित्यागमङ्गीकृत्येति । सस्मितम् । सत्यमसत्योदरि प्रणयोचितं त्वं व्याहरसि परंत्विदं नोपपद्यते

तत्पर्यङ्के परित्यागे त्वङ्क एवावशिष्यते ।
तत्रावयोः समावेशः कथं सुभ्रु भविष्यति ॥ १६३ ॥

मन्दारशेखर किं ब्रवीषि । सुन्दरि क्व गता ते सहोदरी नेह दृश्यते शृङ्गारनीकेति । मदनमञ्जुले किं ब्रवीषि । सा सपदि सपरिवारा स्वभागिनेय्याविनोदचन्द्रिकायाः॥प्रथमरङ्गाधिरोहमहोत्सवोचितशुभारम्भसम्भारकलनायां दत्तावधाना तत्रैवास्ते रङ्गशालायाम् । युवयोरामन्त्रणाय प्रेषितपूर्वया शृङ्गारनिपकया न दृष्टावप्यदृष्टविशेषान्मे भवन्तावत्रैवागतौ । तदिदानीं मदीयप्रार्थनाममोघीकृत्य युवाभ्यामप्यत्रोत्सवे संनिहिताभ्यां भवितव्यमिति । मन्दारशेखर किं ब्रवीषि । सखे समुपस्थितस्ते संप्रति पूर्णपात्रव्यय इति । सुन्दरि कतममुहूर्ते रङ्गावतारः । किं ब्रवीषि । मध्यंदिनात्पञ्चम इति । तर्हि पुनरागमिष्यावः । गन्तुमिदानीमनुजानीहि । किं ब्रवीषि । अये को नाम बहुवल्लभस्य यूनः पुनरागमे विश्वासः । तदधिगलमर्प्यतां मे पुनरागमनलग्नकस्ते हस्त इति । सस्पृहमुरसितस्याः करं दत्वा । सुन्दरि न यदि पुनरावामागमिष्यावस्तर्हि शपावहे तव कठिनपीवरपयोधरतटघटितघुसृणरसपलाङ्कुरेभ्यः । सप्रश्रयं किं ब्रवीषि । त्वरितमागम्यताम् । प्रतिपाल्यते वां पदवीति । तथास्तु गच्छावः । अग्रतो गत्वा निरूप्य । वयस्य पश्येतश्चन्द्रशालायां

रणैर्मञ्जीराणां मदनगुणसिञ्जाकृतरणै-
र्दृशा कोशोदञ्चत्कुसुमशरनिस्त्रिंशसदृशा ।
हरन्ती धैर्यं नो दिशि दिशि किरन्ती स्मितरुचं
भ्रमत्येषा योषा विकलकलदोषाकरमुखी ॥ १६४ ॥

मन्दारशेखर किं ब्रवीषि । अये आश्चर्यमेतत्

अम्भोजद्वयमिन्दुमण्डलगतं फुल्लं दरीदृश्यते
शैवालं गगनान्तरालपदवीमालम्ब्य संशोभते ।
नीचैरस्य सरोवरस्य पुलिनद्वन्द्वं परं राजते
चेतः कोऽपि हरत्यपूर्वविभवः सर्गोऽत्र पैतामहः ॥ १६५ ॥

इति । सखे किमेनां त्वं जानासि । किं ब्रवीषि । जानामि । एषा कान्तिमञ्जर्याः कनीयसी प्रसादकन्दलीति । साश्चर्यम् । सखे किमेषा प्रसादकन्दली ।

अतीतायां शरद्यस्या वक्षो निहितसंश्रिति ।
नाद्यनिर्भरवक्षोजं विजहात्यवगुण्ठनम् ॥ १६६ ॥

तन्मन्ये मदनेन्द्रजालकल्पितोऽस्याः कुचभार इति । किं ब्रवीषि। एवमेतन्न सन्देहः ।

संचार्योपरि केशहस्तकपटं बर्हं पुनर्बर्हिणो
वक्षः शून्यतरं निरूप्य तनुभावरलेण संछाद्य च ।
किञ्चिद्वस्तु कुचाख्यमद्भुतरसं चक्रे स्मरो मायया
अथ तत्र
दृष्ट्वा हारगणं भिया तदनु तेनोच्चाटनं विस्मृतम् ॥ १६७॥

अत एवास्य स्थिरत्वमुपपन्नमिति । परिवृत्यावलोक्य । अये नक्षत्रमालामलंकरोति वामतः शृङ्गारशबला । यावदेनामुपसर्पावः । उपसृत्य । अयि शृङ्गारशबले विफलस्त्वदीयोऽयमेतस्यामलंकारकल्पनायासः । यतः

लीयन्तेऽधरसीम्नि विद्रुमरुचो हासेषु हीरप्रभा
दन्तेष्वम्बुजगर्भरम्यरुचयः केशेषु नीलत्विषः ।
मुक्ताच्छच्युतयः पुनर्भवचये गाङ्गेयभासोऽङ्गके
केनास्याः सुतनोर्नताङ्गि कतमा शोभाद्य संपाद्यते ॥ १६८॥

प्रत्युत शशिनि विशेषकमग्निशिखोदारगद्यतन्वाना ।
शशिनमपि चक्रवाके कलयन्त्युपहास्यते भवती ॥ १६९ ॥

अयि किमहमेनामालापयामि । किं ब्रवीषि कदात्र दृढः प्रतिषेध इति । सहर्षमुपसृत्य । अयि नक्षत्रमाले

त्वदधरमवरोणपुण्ड्रसारं
झपदि समर्पय मह्यमातिथेयम् ।
रदमुखदलितेन येन बाले
शिथिलधनुः स भवेद्रसालधन्वा ॥ १७० ॥

मन्दारशेखर सभ्रूभङ्गं किं ब्रवीषि । विरम सखे कृतमनया नर्मालापप्रसङ्गेन शाठ्यशालिन्या । या पुनर्जल्पति भवादृशेऽपि मौनमेवावलम्बत इति ।

शृङ्गारशबले सप्रश्रयं किं ब्रवीषि। अयि सरसहृदय मा कुरु कोपपात्रं सर्वथा विधेयमिमं जनम् । मदायत्तेयं पुरो मे न भाषते पुरुषजनैरिति । मन्दारशेखर किं ब्रवीषि । किं बीजमस्या मदपारवश्य इति। शृणु सखे कुतः करकङ्कणनिरीक्षणे दर्पणापेक्षा । अस्याः

विधुं वक्त्रोन्मेषो विहसति गिरिशं कुचभरो
जयत्याक्षिद्वन्द्वं कमलभवगर्हां कलयति ।
यतः सेयं तन्वी मदपरवशा संप्रति सखे
जगज्जालं सर्वं तृणमिव मनस्याकलयते ॥ १७१ ॥

शृङ्गारशबले किं ब्रवीषि । अयि विलासिनी मदधीनेयमिति मयोक्तं युवाभ्यामन्यथावगम्यत इति । अस्तु नतभ्रु तदेतदुभयमपि । समञ्जसं श्रुतिमभिनीय । कोऽयमुपवनसञ्जनित कलकलः। किं ब्रवीषि । मित्रनन्दासुन्दरकयोरक्षक्रीडा प्रभवतीति । सौत्सुक्यम् । तर्हि तत्रैव गच्छावः । गत्वा विलोक्य सानन्दम् । सखे पश्य

पाशक्षेपणवञ्छितस्तनतटीदत्तेक्षणः सस्पृहं
शारिन्यासविपर्ययेण सरुषा संताड्यमानस्तया ।
शश्वद्देवनबिन्दुवृन्दगणनामोक्षग्रहेषु स्खल-
न्सोऽयं सुन्दरकः स्वायकुतुकादक्षैरितो दीव्यति॥१७२॥

समीपमुपसृत्य । विजयतामक्षक्रीडाभिनिवेशोऽयमलक्षितमित्रस्य मित्रस्य मे सुन्दरकस्य । ससंभ्रमं परिवृत्यावलोक्य किं ब्रवीषि। एहि सखे त्वदनुप्लवोऽहममक्षाद्विर्जितः सकृद्वा जेष्यामि मित्रनन्दामिति । सखे सर्वथैव विफला ते विजयाशा तन्वङ्ग्याः । यतः

नेत्रे ते वशिते मुखेन सुदृशः श्रोत्रे प्रियैर्भाषितै-
र्जिह्वा बिम्बफलाधरेण हृदयं वक्षोजयुग्मेन च ।
अङ्गानामथ सौरभेण महता घ्राणं त्वगालिङ्गनै-
रित्थं हारितचेतनाक्षनिवहः किं दारवैर्जेष्यसि ॥१७३॥

मन्दारशेखर किं ब्रवीषि । कथय सखे सुन्दरक कीदृशोऽत्र पणबन्ध इति । सुन्दरक किं ब्रवीषि । श्रूयतां कथयामीत्यर्धोक्ते मित्रनन्दे सुन्दरकं प्रति ससंभ्रमं किं ब्रवीषि । भवतु तदेतत्पश्चाद्वक्ष्यसि दीयतामितो दृष्टिः परिणाय इति। मन्दारशेखर किं ब्रवीषि। सुन्दरककिमेवमसमग्रमुक्त्वा

विरमसीति । सखे किमत्र कुर्यात्सुन्दरकः ।

निषेधमाज्ञापयति प्रियेयं
वक्तुं ग्लहं त्वं त्वरयस्यतीव ।
हंसद्वयेनेव विकृष्यमाणो
बिसाङ्कुरोऽयं विकलस्तदास्ते ॥ १७४ ॥

मित्रनन्दायाः सपाशकं हस्तं गृहीत्वा । सखि त्वं वा कथयात्र पणबन्धं वक्तुमाज्ञापय वा सुन्दरकम् । सस्मितं किं ब्रवीषि । कया निरुद्धं पणबन्धकथने मुखमेतस्येति । सखे सुन्दरककथयेतो निःशङ्कं पणबन्धं दत्तनिदेशनोऽसि प्रेयस्या । किं ब्रवीषि । शृणु सखे गतपराजये क्लृप्तं पणयुग्मं न पुनरस्याः पराजये पणनियम इति । सहर्षोत्सुक्यम् । कथय सखे कीदृशं तत्पणयुग्मम् । किं ब्रवीषि । प्रथमोऽस्याः कठिनकुचाभ्यामात्मनो हृदयास्कन्दनम् । द्वितीयस्तु वित्तबन्धकलनयैतस्याश्चित्तरञ्जनमिति । सश्लाघम् । सखे तर्हि जयादपि पराजय एव गरीयान्

वित्तैश्चित्तविनोदनैर्बहुविधस्रक्चन्दनस्यार्पणै-
र्यो यूनां युवतिस्वयंग्रहपरिष्वङ्गः स्वतो दुर्लभः ।
सोऽयं चेद्घटते घनस्तनतटीसंघट्टितोरःस्थलः
संप्रत्यङ्ग पराजयेन विजयायास्तु प्रणामाञ्जलिः ॥ १७५ ॥

मन्दारशेखर किं ब्रवीषि । सखे द्वितीयस्तु पणो न समञ्जसः

तिष्ठन्पाणिसमुत्थृतातिविततश्रोणीभरः सुभ्रुवा
हस्ताम्भोजयुगेन पीनकुचया कण्ठे समालम्बितः ।
चुम्बन्वक्त्रमुपैति मोहनसुखं धन्यस्तदास्तामिदं
तन्वङ्ग्या विजितः स साहसरसः केनायमालम्ब्यताम् १७६

इति । एहि सखे गच्छावः । मित्रनन्दे किं ब्रवीषि । युवाभ्यामपि क्षणमात्रमत्र विधीयतामक्षक्रीडाविनोद इति । सुतनु न रोचते मह्यमक्षक्रीडा । किं ब्रवीषि । अपि रोचते चतुरङ्गक्रीडेति । साकूतस्मितम् । सुतनु कुतोऽस्माकमनङ्गक्रीडैकरसानां चतुरङ्गक्रीडारतिः । मित्रनन्दे सस्मितं किं ब्रवीषि । आयि रसिक कथं न जानासि सापि चतुरङ्गावलम्बनैवेति । सहर्षोत्सुक्यम् । अयि कथय प्रथुकुचे कीदृशं तच्चतुरङ्गं यदेतदालम्बन-

मनङ्गक्रीडायाः । समन्दस्मितं किं ब्रवीषि । किमस्ति ते नाभिज्ञातम् ।
तथापि कथयामि

अधरदलं कुचभारो जघनं चालम्बनानि खलु तस्याः ।

इति । मन्दारशेखर किं ब्रवीषि । सुतनु चतुर्थमनुक्त्वा किमेतावता विरमसीति । सखे किं न जानासि

अनया तत्क्षणलज्जानतमुख्या कथितमेव तत्तुर्यम् ॥ १७७ ॥

मित्रनन्दे विजयस्व चिरम् । सुन्दरक स्वैरं रमस्व प्रेयस्या । वरमावामितोऽन्यत्र गच्छावः । रथ्यान्तरं प्रविश्य ऊर्ध्वं विलोक्य । अये संप्रत्यासन्न इव प्रतिभाति मध्यंदिनसमयः । तथा हि

स्वे स्वे कर्मणि संनियोज्य सुहृदो भूमीसुरान्मन्त्रिण-
श्चक्रं निर्भरमारचय्य भगवान्संप्राप्तरागोदयः ।
स्वालोकक्षणकान्दिशीकमधुनोत्खातुं विचिन्वन्निव
ध्वान्तं क्वापि निलीनमम्बरमणिर्व्योमाग्रमारोहति ॥ १७८ ॥

इदानीं

स्कन्धान्सिन्धुरयूथगण्डकषणव्यासक्तदानोदका-
न्सेवन्ते मधुपा महीरुहशिरः पुष्पाणि हित्वा भृशम् ।
लीयन्ते वलभीकुलायकुहरे निष्पन्दमेते खगा
जीव्हालीढवधूमुखा मृगगणश्छायासु विश्राम्यति ॥ १७९ ॥

मन्दारशेखर किं ब्रवीषि ।

स्थाने दूरगते रवौ यदभजन्मुच्छेति पाथोजनीं
कामं प्रोषितवल्लभां कलयते कान्तां यतो दुःस्थता ।
तस्मिन्नेत्रपथातिथावपि कुतो धत्ते परिम्लानतां ॥

इति । सखे किमत्र प्रष्टव्यं

प्रस्थानादधिकं प्रियस्य दयितां क्लिश्नाति नीरागता ॥ १८० ॥

तदेहि कुसुमाकरविश्रामनारामसुपेत्यातपमपनेष्यावः । अग्रतो गत्वा विलोक्य। कासौ

ग्रन्थ्युन्नेयकुचस्थितिं तनुतरं कूर्पासकं बिभ्रती
कण्ठालम्बिसमुद्गकेनकनतासंवाहितोरःस्थला ।
व्यालोलालकजालमृष्टभसितोदारालिका बालिका
मन्दं मन्दमुपैति कुन्दरदनाग्रोताल्पितानाधरा ॥ १८१ ॥

अस्याः

संपातादलिनां मरुत्परिभवाच्चातुं मुखाम्भोरुहं
नासागन्धफलीं प्रवेणिभुजगीं कुर्वन्कुरङ्गीदृशः।
प्राणं गन्धवहं कचान्भ्रमरकाञ्चक्रे कुतः पद्मभूः
कृत्याकृत्यविवेकगन्धविमुखी धिक् श्रोत्रियाणां मतिः॥१८२॥

पश्यैतद्न्यद्प्यनुचितं विश्वसृजः

अभिनवनवमालिकाप्रसूना-
न्मृद विरचय्य वपुः सरोरुहाक्ष्याः।
अकुरुत यदसौ धरानुकारि
स्तनयुगलं युगलं नितम्बयोश्च॥ १८३॥

किं ब्रवीषि। सखे न खल्वनुपयुक्तार्थसंस्पर्शी विधिसर्गः।

लावण्यामृतमाहितं वरतनोरङ्गे स्थितं यत्पुरा
तत्तारुण्यवनोदयेन बहुधा संवर्धितं पद्मभुः।
वीक्ष्य स्यन्दनशङ्कितः कुचयुगव्याजान्नितम्बच्छला-
च्चक्रे सेतुयुगं न चेदिह कुतस्तादृग्समस्थास्नुता॥ १८४॥

इति। परिक्रम्यावलोक्य। इतस्तावदापतन्तीं भुजङ्गपटीं पृच्छामि। इयं खलु सकलविटशिरोमणिभिः संभूयाभिषिक्ता कुट्टिनीत्वसाम्राज्ये। अतोऽस्याः करतलगतः सकलनगरनारीवृत्तान्तः। एहि भुजङ्गपटिके अथ कासौ मत्तकाशिनी। किं ब्रवीषि। अस्ति खलु गणभक्तिनामा कापालिकलिङ्गधारी महाधनिकः। तस्येयं नन्दिनी वीरश्रेष्ठिककनिष्ठतनयस्य निर्वाणनाम्नः कलत्रं शिवभक्तिमञ्जरी नामेति। क्वेदानीं प्रस्थिता घनातपघनकेशी। किं ब्रवीषि। उपकल्यकोविदारवने भगवतः पुरशासनस्य सपर्यां निर्वर्तयितुमिति। कः पुनरस्याः फलोद्देशः। किं ब्रवीषि। आत्मनि पत्युः प्रातिकूल्यनिरास इति। साश्चर्यम्। किमस्यामपि भुवनमोहनदीपिकायां पतिहतकः प्रतिकूलः। अथ वा नियतिलब्धान्यपि निक्षेपधनानि लोष्टवदवभासन्ते दुर्भगाणाम्। मन्दारशेखर किं ब्रवीषि। कस्य हेतोः पतिरस्याः प्रतिकूल इति। भुजङ्गपटि किं ब्रवीषि। बीभत्सगुणनिकायामनिवार्यानुरक्तेनेति। अयि कासौ बीभत्सगुणनिका नाम। किं ब्रवीषि। किं तां न जानामि मदनविलासमञ्जर्या बहिरङ्गचेटीमिति स्मृतिमभिनीय। अये ईदृशोऽपि जयति कलत्ररत्ने

बन्धानर्हविकीर्णकम्पितकचप्रोद्धूनाचिह्नेक्षण-
प्रोदञ्चन्मशकावलीपरिवृतं वक्त्रं सदा बिभ्रतीम् ।
लक्षालक्षपरीतलोमशवपुःकण्डूयनव्याकुलां
वर्षादर्शनिशानिभां स चकमे धिक्तां कथं दुर्मतिः १८५

मन्दारशेखर किं ब्रवीषि । स्थाने खलु चक्रीवतः कुसुमराशिमनादृत्या-
वकरकूटभस्मन्युपावर्तनमिति । आकाशे लक्ष्यं बध्वा ।

पद्मद्वन्द्वविलोचना समकरा शङ्खोल्लसत्कन्धरा
नीलोदारकचोरुकच्छपलसत्पादाग्रमंशोभिता ।
कुन्दोद्भासिरदा मुकुन्दतनुजश्रीः खर्ववक्षोरुह-
द्वन्द्वाग्राप्यमनुष्यधर्मणि विधे सैषा कथं तेऽर्पिता ॥ १८६ ॥

मन्दारशेखर किं ब्रवीषि । एवमसमानरूपशीलदांपत्यघटनया किं फल-
माप्नोति विरञ्चिरिति । अयि किं कथयामि

आमोदमेदुरगलन्मकरन्दधारा-
संतर्पितभ्रमरराजकुटुम्बकानि ।
माल्यानि फुल्लतृणशून्यमयानि कैश्चि
कण्ठेऽर्पयन्त्यदृपयानि तदेव सोऽपि ॥ १८७ ॥

अथ वा निष्ठत्वयमेवंविधशील एव पद्मभवः । किं नु

घ्राणाल्हादकृता शरेण रसनासंतर्पणेच्छामना-
त्रिष्टचूतेन मनोनुकूलदयितैर्योषिज्जनं योजयन् ।
शृङ्गारेऽधिकृतो विरञ्चिहतकेनोपेक्षितां सुन्दरी-
मेनां कामितकामनैर्घटयितुं कामः कथं नेच्छति ॥ १८८ ॥

अनङ्गमुद्दिश्य । अयि मकरकेतो त्वं पुनरतनुरसि किमेवमतनुकचायाः सां-
प्रतं ते समुपेक्षा । अथ वा किमस्यां शैवाङ्गेनेति प्रथयसि विद्वेषम् ।
भिन्नर्हि जाल्मोऽसि । अस्याः

चक्षुस्तावक केतनं कचभरो मौर्वी वचः कार्मुकं
वक्त्रं ते मतनं जगज्जयविधौ साहाय्यकृन्मातुलः ।
पाण्योष्ठं भटवाहजीवनमिदं गात्रं तु जैत्रायुधं
पञ्चेषो निजवैभवास्पदमिति ज्ञाता न किं सुन्दरी ॥ १८९ ॥

विमृश्य । कुसुमायुध विज्ञातमेव हृदयसारः ।

जलजदलदृशोऽस्या रूपशोभाजिताया
अयि निजदयितायाः क्लिष्टचित्तानुरोधात् ।
कलयसि समुपेक्षां राज्यलक्ष्म्यां तवास्यां
न हि खलु कुसुमास्त्र स्त्रीजितानां विवेकः ॥ १९० ॥

मन्दारशेखर सोत्कण्ठं किं ब्रवीषि । अये भुजङ्गपटि तर्हि किमेषा निरन्तरमेवमवसीदति वन्ध्ययौवनश्रीरिति । भुजङ्गपटि कराभ्यां कर्णौ पिधाय किं ब्रवीषि । शिव शिवायमश्राव्य एव । प्राणिति वां प्रियमित्रे कुमुदाङ्गदे वन्ध्ययौवनश्रीरियमित्यश्लीलवाद इति । सहर्षोत्सुक्यम् । कथमियं रसितरसा प्रियसुहृदा कुमुदाङ्गदेन । किं ब्रवीषि । अथ किमिति । कथय तर्हि कथमनयोर्घटनाप्रकारः । किं ब्रवीषि । स्वस्वामिन्याः कुरुविन्दप्रभायाः कार्यवशाद्गच्छन्त्या मे क्षणमात्रमपि स्थातुमत्र नास्त्यवकाशः । तस्मादहं गच्छामि । मुहूर्तमात्रमत्रास्यतां युवाभ्यां रथ्यापिचुमन्दमूले समागच्छत्यनेन पथा कुमुदाङ्गदः । स एव सर्वं कथयेदिति । गच्छ तर्हि क्षणमात्रमत्र स्थित्वा तस्यैव पदवीं प्रतिपालयावः । वामतोऽवलोक्य सहर्षम् ।

अंसभ्रष्टनवोत्तरीयवसनव्यामृष्टरथ्यापथः
स्रस्तं पार्ष्णिविलम्बमप्यकलयन्धूर्णापरट्टाञ्चलम् ।
घर्मक्षालितगन्धसारतिलकः पादस्खलत्पादुका-
संरुद्धाशुगतिः पदे पद इतः सोऽयं समागच्छति ॥ १९१ ॥

भवत्वेनं समुपसर्पावः । उपसृत्य । क्व गच्छतीदानीमलक्षितमित्रजनः कुमुदाङ्गदः । कुमुदाङ्गद परिवृत्यावलोक्य किं ब्रवीषि । कथं प्रिये मित्रे मे कन्दर्पविलासमन्दारशेखरौ । अयि चिरसमाराधितसिद्धोपदिष्टामतनुतापापनोदिनीं कामपि सिद्धमूलिकामन्वेष्टुं सरभसमुपसर्पता मया सपदि न लक्षितयोर्युवयोः समुचितमत्राभिपततिं मय्युपालम्भ इति । भवतु कुत्र तस्याः सिद्धमूलिकायाः स्थितिसंभावना । किं ब्रवीषि । कोविदारवन इति । मन्दारशेखर किं ब्रवीषि । किं नामधेया सा मूलिकेति । सस्मितम् । सखे भवेदसौ शिवभक्तिमञ्जरी नाम । तामन्तरेण का पुनरतनुतापापनोदिनी कुमुदाङ्गदस्य । कुमुदाङ्गद साश्चर्यमिव किं ब्रवीषि । सखे किं त्वया लब्धमलौकिकं चक्षुः येन ममाचरितमीदृशमतिनिगूढमप्यपरोक्षमि-

व जानामीति । सखे किमत्रालौकिकचक्षुषा । न खलु मृगमदसौरभो-पलब्धिर्दीपालोकमपेक्षते । कथय कथं सा भवतासादिता । किं ब्रवीषि । पुरैकदा कोविदारवनस्थिते मयि सुस्तनी सा विविधपूजोपहारहस्ता शंकरायतने प्रविष्टा । अथाहमपि तादृशदर्शनीयरूपदर्शनलालसतया तत्रैव प्राविशम् । सा तदानीं निःशलाकं मामालोक्य सलज्जमिव शिरस्युपनीत-सिचयाञ्चला कथमपि कपर्दिनः पूजां निर्वर्त्य

कामं पूरय कामारे ममेति स्मेरभाषिणी ।
विजहौ स्विन्नमुत्कम्पमन्तरा कुसुमाञ्जलिम् ॥ १९२ ॥

ततश्च मया

नाममात्रेण कामारिस्त्वमीशान न कर्मणा ।
आत्मानं भजतां चित्ते कामं कलयसे यतः ॥ १९३ ॥

इति कृतः प्रणामः । ततः

व्यवस्यन्त्यां तस्यां सदनगमने सम्प्रति मया
प्रसूनेषोश्चापच्युतविशिखनिर्भिन्नमनसा ।
गृहीतं हस्ताभ्यां द्वयमपि महासाहसवशा-
दमुभ्यो नैवापं जलमथ कुचः पक्ष्मलदृशः ॥ १९४ ॥

इति । अहो निस्त्रिंशधाराताण्डवं कुमुदाङ्गदस्य । यः पुनरज्ञातभावां कुचे जग्राह परतरुणीं । मन्दारशेखर किं ब्रवीषि । अहं मन्ये स्वनिरीक्षणक्षणजनितैस्तथाविधसात्त्विकभावैर्विज्ञात एव तस्याः कुमुदाङ्गदेन भाव इति । सखे मैवम् ।

पश्यन्ति स्निग्धमुग्धं प्रतिकलमधुरैर्मोहयन्त्यङ्गहारैः
साकूतैर्मन्दहासैरपि परपुरुषाञ्शश्वदानन्दयन्ति ।
चेष्टन्ते चेत एते किमपि परिचयाद्धारयिष्यन्ति तेषां
प्राणान्को वेद लोके परजलजदृशां चित्तमत्यन्तलोलम् ।१९५।

कुमुदाङ्गद किं ब्रवीषि । सखे सत्यमिदम् । तथापि कुसुमशरवीरपराक्रमप्रापितपारवश्यानां कुतोऽस्माकं विमृश्यकारितेति । मन्दारशेखर किं ब्रवीषि ।

समाधुर्यश्चापो मृदुलमृदुलो मार्गणगणो
रणे कर्णाभ्यर्णं प्रविशति परं निर्गति भटाः ।

सदा रत्यासक्तः स्वयममबाणोऽङ्कविकल-
स्तथाप्येतत्सर्वं जयति जगदित्यद्भुतमिदम् ॥ १९६ ॥

इति । अत एव व्याहरन्ति

क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे ॥

इत्यभियुक्ताः । कुमुदाङ्गद ततस्ततः । किं ब्रवीषि । ततः

गाढालिङ्गनमज्जदुन्नतकुचां तां कर्तुमुत्कण्ठया
यावत्संनिहितोऽस्मि पक्ष्मलदृशः साकूतहासेक्षणः ।
तावद्वक्षसि मे निपत्य रभसादाघ्राय गण्डस्थलं
तन्वङ्ग्याथ तयैव कूणितदृशा पीतो मदीयाधरः ॥ १९७॥

इति । ममे त्वया प्रमादगलितेनाप्यमृतायितं प्रदीपेन दैववशात् । ततः कथय किं संवृत्तम् । किं ब्रवीषि

नाहं वेद न सा तन्वी किमासीत्तदनन्तरम् ।
साक्षी स एकस्तद्वेद स्मरः शृङ्गारनायकः ॥ १९८ ॥

अथ सा प्रणयगुरुणा मदीयप्रार्थनानुरोधेन तत्र क्षणमेकं कथमपि स्थित्वा गुरुजनोपासितसमयातिपातो भविष्यतीति कृच्छ्रेण ततो निश्क्रामेति । मन्दारशेखर किं ब्रवीषि । अहो स्वैरैवंविधशीलायास्तस्या अपि गुरुजनमपर्यानुरोध इत्याश्चर्यमिति । सखे सम्यगवधारय कथयामि ते तत्त्वम् ।

पत्युर्भक्तिविडम्बनार्जवरसः सर्वत्र शुश्रूषया
भूयस्या गुरुतोषणं व्रतरतिः शान्तिः सतीसंश्रयः ।
संलापस्मितदर्शनादिनियमो भोग्येषु चानादर-
स्तानीमानि कलङ्कगोपनविधेरङ्गान्यसत्याः सखे ॥ १९९॥

कुमुदाङ्गद ततस्ततः । किं ब्रवीषि । हन्ताहं किं कथयामि मन्दभाग्यः सा मामपास्य गतैव । तदानीं

नितम्बप्राग्भारः पृथुलकुचभारोऽपि न तथा
रुरोध प्रेयस्या अपि मृदुपदं निर्गमाविधौ ।
यथा तादृग्दैन्यप्रकटितविविक्तान्यरहया
दृशा मां पश्यन्त्या गमनमरुणत्प्रेमगरिमा ॥ २०० ॥

इति । मन्दारशेखर किं ब्रवीषि ।

ताम्बूलहास्यपरिरम्भणनर्मगर्भ-

मंलापचुम्बनविनोदमहासिकाभिः ।
विश्रम्भणस्तिमितचित्तमृगीकमारं
स्वस्त्रीरतं भुवि न कस्य धिनोति चेतः ॥ २०१ ॥

तथापि धर्मदाराननादृत्य सुलभेतरसमागमानि परकलत्राणि किमर्थमनुसरन्ति नश्चेतांसीति । कुमुदाङ्गद किं ब्रवीषि । सौलभ्यासौलभ्य एव विरागानुरागहेतुः स्वपरकलत्रयोर्विलासिलोकस्येति । सस्मितम् । सखे बाढमाह कुमुदाङ्गदः ।

यस्य दूरे महानद्यः स तत्र स्नातुमिच्छति ।
तद्वारिणैव तत्रत्या पादशौचादि तन्वते ॥ २०२ ॥

कुमुदाङ्गद क्वेदानीं गच्छामि । किं ब्रवीषि । अहमिदानीं लब्धावकाशया प्रियतमया प्रेषिताया भुजङ्गपेट्या वचनेन कोविदारवनमालतीनिकुञ्जमनुसरामीति । मन्ये अनुकूल एवायं पराङ्गनोपभोगाय स्वस्थानविश्रान्तमकरन्दचेतनमङ्गातो मध्यंदिनसमयो निःशलाकश्च वननिकुञ्जः । तद्गम्यतामविलम्बेन । मन्दारशेखर किं ब्रवीषि ।

नूनं कष्टतरः पराम्बुजदृशां संपर्कसौख्योदयः
सोऽयं चेद्घटते पुराणसुकृतैः स्वर्गो लघीयांस्ततः ।
आस्तां सोऽपि पराङ्गनाप्रहितया दूत्या समं भाषणं
याद‍ृङ्निर्वृतिमातनोति हृदये केनोपमीयेत सा ॥ २०३ ॥

अतस्त्वमीदृशानिर्वृतिपात्रं धन्यानां धन्यतम इति । अयि तादृशदूत्याः स्मेरमुखानिरीक्षणमेवालं निरुपमनिर्वृतये किं पुनः संभाषणम् । सखे कुमुदाङ्गद गच्छ गच्छ सन्तु शिवास्ते पन्थानः । कतिपयपदानि गत्वा पुरोऽवलोक्य । कोऽयमितः सोद्वेगमापतति विप्रवटुः । मन्दारशेखर किं ब्रवीषि । सखे त्वयायमलक्षितवर्णलिङ्गोऽपि वर्णात्यवगतः केन हेतुनेति । सखे दुरपह्नवब्रह्मवर्चसविशेष एवावगमयति वर्णित्वमेतस्य । यावदेनमालापयामि । बटो को हेतुस्ते पलायने । सगद्गदं किं ब्रवीषि । महानुभाव त्रायस्व मां त्रायस्वेति । कथय बटो कुतस्ते भयमुपस्थितम् । मुहुः पश्चादवलोकयन्सवैलक्ष्यं किं ब्रवीषि । अये किं कथयामि वेपते मे नितान्तमन्तरङ्गं न स्फुरति च वक्तव्यमिति । अग्रतो विलोक्य । अये किमेतमनुपतति मकोर्णं पाशहस्ता प्रभातसंमूर्दा । यावदेनां पृच्छामि ।

सुन्दरि किमर्थमस्मिन्कोपारम्भः । अनाकर्णितकेन किं ब्रवीषि । आये विलासिन्मुखैनं हताशं पार्शवेल्ला नेप्यासीति । सृदाति को हेतुरस्य नियन्तगे । मन्दारशेखर किं ब्रवीषि । सखे किमत्र प्रष्टव्यम्

रतौ किञ्चित्प्रतिश्रुत्य दारिद्र्याद्दातुमक्षमः ।
अतिमन्थातुमीष्टेऽसौ तदेषा बहुमिच्छति ॥ २०४ ॥

प्रभासकौमुदि सावज्ञमिव किं ब्रवीषि । अयि मन्दारशेखर

यदि न सन्ति ततः क्षितिमण्डले
मल्दया धनिनश्च भवादृशाः ।
भपकरासभरङ्कवटुव्रमू-
र्वयमिहान्यतमेन रमामहे ॥ २०५ ॥

इति । सुन्दरि कृतं परिहासजल्पितेन । कथय त्वां पृच्छामि । चोरो राज्ञा दण्ड्यः परदाररतोऽपि तेनैव । सखि दण्ड्यते त्वयायं किं पुनरागः पुरस्कृत्य । किं ब्रवीषि । अयमेव प्रष्टव्यो हताश इति । कथय बटो किं त्वया कृतम् । किं ब्रवीषि । अधीतो मया साङ्गः स्वाध्यायः काशकौपीनशर्मणा कापिशायनब्राह्मणपुत्रेण कपिसगोत्रेणेति । अरे मूर्ख किमेतत्कथनेन प्रयोजनम् । किं ब्रवीषि । त्वत्तः कन्यापरिग्रह इति । जडमते कुतस्त्वमिदानीमाम्नानभ्रष्टः कोविदारानाचष्ट इति न्यायमनुसरसि । कथय त्वया किमपराद्धमेतस्याम् । सशिरःकम्पं किं ब्रवीषि । न मयापराद्धं किञ्चिदपि । किंतु भिक्षामटन्सदनमेतस्याः समागतोऽस्मीति । सस्मितम् । धन्योऽसि विप्रबटो । वेश्यागारे भिक्षांचरता त्वया सम्यगुज्ज्वलितं ब्राह्मण्यम् । किं ब्रवीषि । नहि किमुपाध्यायोपदिष्टमतिलङ्घनीयमीति । सोत्प्रासम् । अरे कथय कीदृशस्त उपाध्यायोपदेशः । किं ब्रवीषि ।

ऋग्वेदो वा यजुर्वेदः साम वा यत्र गीयते ।
पूते तत्र गृहे भिक्षांचरेति गुरुरन्वशात् ॥ २०६ ॥

अतोऽहमेतस्या मन्दिरे मधुरतरं गीयमानानि सामान्युपश्रुत्य भिक्षार्थं प्रविष्टोऽस्मीति । धिङ्मूर्ख श्रुतिमधुरां संगीतविद्यां श्रुतिरिति मन्वानो भ्रान्तोऽसि । भवतु ततस्त्वया किं कृतम् । किं ब्रवीषि । अथ मया निगमनिगमपाठायतनानां नवणनिलनिक्षेपकरण्डं कैन्त्वमन्वेषयता सा-

दृश्यभ्रमेण कोऽपि मांसग्रन्थिस्मन्देवेदमिति दृढतरं करेण गृहीत इति । सस्मितम् । मखे गृहीतः स्यादनेन कस्याश्चित्तरुण्याः पयोधरकलशः । वटो किं ब्रवीषि । किमुच्यते जलकलश इति । कथं घटेत कञ्चुकान्तरं जलकलशास्थितिरिति । मन्दारशेखर किं ब्रवीषि । सखे स्फटीकृतमनेन स्वयमेव ते जिज्ञासितमिति । कथय वटो ततः किं संवृत्तम् । किं ब्रवीषि । तत्क्षणमेव मदीयं तादृशं कौशेयकौपीनमपि समुत्पाट्य समुत्थितः प्रतिभयदर्शनः कोऽपि महासत्वः । तत्स्मरणमद्यापि वपुषि समुद्ञ्चयति मे सकम्परोमाञ्चमिति । धिङ्मूर्ख स्वाङ्गजमपि विकारं न जानासि । भवतु ततस्ततः । ततोऽहं प्रकुपितोपाध्यायमुखानिरीक्षणेनेव तद्दीक्षणेन कन्दलितमहाभयो न किञ्चिदवेदिषमिति । अये सम्यग्गौरवमानीतो भवन्तमुपाध्यायवदुपाध्यायः । ततस्ततः । किं ब्रवीषि । इयं जानाति प्रच्छेममामनन्तरवृत्तान्तमिति । त्वं कथय प्रभासकौमुदि अथ किं कृतं विप्रवटुना । किं ब्रवीषि । अयि किं कथयामि पिशाचमुखस्यास्य दुर्विलसितम् । या पुनरद्याप्यनारूढपुरुषपर्यङ्का करभाङ्कमे कनीयसी निकाममासीद्विकल्कीकृतेति । सासूयस्मितम् । अयि कथय कीदृशं तद्विकल्यम् । सलज्जस्मितं किं ब्रवीषि । अहो का नाम ऊह्यानुयोगिनं जनमुत्तरयेदिति । सशिरःकम्पं वटोः पृष्ठमास्फालयन् ।

धन्योऽसि भुसुरवटो द्रविणैकसाध्यं
वाराङ्गनारतमुपेत्य विना श्रमेण ।
आर्द्रा व्रताय भवताथ मनोभवाय
दत्तो जलाञ्जलिरहो कुसुमाञ्जलिश्च ॥ २०७ ॥

कथय वटो कस्ते हेतुः पलायने । किं ब्रवीषि । अथ तत्रत्यैः स्त्रीजनैः प्रस्फोटनसंमार्जन्यादिभिरुच्चावचं संताड्य ब्राह्मणप्रसूतिरिति कथंचिन्निष्कासितोऽस्मि । अथेयं सखेव मद्यःप्रसूता होमशालान्तरालादुत्प्लुत्य पाशहस्ता सकोपं मामनुपपातेति । अरे मूर्ख कुतो नाम होमशाला वेश्यागृहे । किं ब्रवीषि । कथमन्यथा तत्र दर्व्याज्यस्थाल्योरवस्थानमिति । न मयार्थोऽवगतो वटुवचनस्य । मन्दारशेखर किं ब्रवीषि । ममैवं प्रतिभाति ।

केलीगृहसीम्नि निहितां महतीं च पतद्ग्रहं च संवीक्ष्य ।

दर्व्यां ज्यस्थाल्याविति सोऽयं वभ्राम विप्रवटुः ॥ २०८ ॥

इति । युज्यत एतत् । बटो ततोऽनया किं कृतम् । किं ब्रवीषि ।

मेखलां ब्रह्मसूत्रं च भैक्षमन्नं सवस्त्रकम् ।

गृहीत्वा वटुमारब्धं ततोऽस्माभिः पलायितम् ॥ २०९ ॥

बटो अन्यदपि किञ्चिद्रहितं स्यादनया त्वदीयं । सशिरःकम्पं किं ब्रवीषि । नाहि नहीति । विमूढमते तर्हि दण्डस्ते कुत्रास्ते । ससम्भ्रममङ्गान्यभितोऽवलोक्य किं ब्रवीषि । अये केन हृतो मे दण्ड इति । साकूतस्मितम् । बटो अनयैवासंशयं हृतस्ते स्मरदण्डः । किं ब्रवीषि । स्मृतमनयैवापहृतः सोऽयमिति । सभामकौमुदि सक्रोधहुंकारं किं ब्रवीषि। अरे हताश कन्दर्पविलास इव किं भवानपि मां परिहसितुमिच्छति । पश्य गृध्रबलीकरोम्येतं भूतं वाचाटमिति । बटो सत्रासकम्पं किं ब्रवीषि। अम्ब मा कुरु मां गृध्रबलिं प्रयच्छामि हेमसूत्रसञ्चितं मे कौपीनार्धं तुभ्यमिति । बटो कुतस्ते कौपीनम् । ससंभ्रमं कौपीनस्थानमभिमृशन्सशोकावेगं किं ब्रवीषि । हा हन्त गतं मे कौपीनेन । न गतं प्राणहतकैः। हा हन्त किं करोम्यशरणः ।

दत्तं पुरः मम पितुः प्रपितामहाय

तन्मातुलैश्च मिलितैर्व्रतबन्धकाले ।

तेनाविवाहविभृतं तदिदं कुले नः

पुत्रक्रमादुपगतं नु मयापविद्धम् ॥ २१० ॥

अये सुकृतैकसुलभ कौपीनप्रवेक

निषिद्धमपि तातेन धारणं तव विभ्रमया ।

धृतमस्यद्य जाल्मेन दुर्लङ्घ्या भवितव्यता ॥ २११ ॥

अयि कौपीनप्रवर त्वयाद्य वियुक्तोऽहं मन्दभाग्यः ।

ताते कुप्यति किं करोमि जननीं शोकाकुलां वच्मि किं

त्वद्रिक्तं बत वेत्रसंपुटमहं द्रष्टुं कथं शक्नुयाम् ।

गर्वोदीर्णमखाश्रया तव बलाद्ये मया धिक्कृताः

प्रम्लानेन मुखेन तान्प्रहसतो द्रक्ष्ये सतीर्थ्यान्कथम् ॥२१२॥

रज्यन्ते मयि किं सतीक्ष्य कुलजाः कन्याः सुरूपान्विताः

कौपीनप्रवर त्वयि प्रमथिते पाणिग्रहो मे कुतः ।

संप्राप्य प्रथमाश्रमत्रयफलं विन्दन्ति तुर्याश्रमं
तन्याय्यं कथमद्य मां समभजत्संन्यासयोगः स्वयम् ॥ २१३॥
चीर्णा विश्वजिदादयो बहुमखास्तप्तं सुघोरं तपो
दत्तं भूरि धनं तथा प्रवचनं त्वध्यापितं नैकशः ।
लब्धं त्वं सुकृतेन तेन महता कौपीन मत्पूर्वजै-
र्धिग्धिङ्मां दुरितैकतानजनुषं योऽस्मि त्वया प्रोज्झितः ।२१४।

किं विद्यया किमु कुलेन किमार्यशीलैः
किं जीवितेन विफलेन विना त्वया मे ।
स्याद्वज्रसारघटितं हृदयं मदीयं
कौपीनक त्वयि गतेऽपि न यद्विदीर्णम् ॥ २१५ ॥

इति । वत्स काशकौपीन प्रमुषितेऽपि सर्वस्वे कौपीनमात्रमुत्प्रेक्ष्य किं शोचति भवान् । सोच्छ्वासं किं ब्रवीषि । महानुभाव किं वक्ष्यामि क्षीणपुण्योऽहम् ।

पर्णोऽरण्ये परमसुलभो मेखला तार्णरज्जु-
श्चर्मैणं मे करतलगतं यद्गृहे कृष्णसारः ।
सूत्रे याते व्यसनमिह किं यत्धृतिर्दुःखहेतुः
शोच्यं तन्मे सुकृतिसुलभं किन्तु कौपीनमेकम् ॥ २१६ ॥

इति । बटो आशिषैनामभिनन्दय दास्यति ते कौपीनम् । सहर्षं किं ब्रवीषि । सुभगे भवतु ते भगवृद्धिः । देहि मे कौपीनमिति । प्रभासकौमुदि सक्रोधं हस्तमुद्यम्य किं ब्रवीषि । अरे हताश बीभत्सवादिन् किमद्यापि न विरमसि कदर्यवादात् । मा जल्प माजल्पेति । सानुनयम् । अयि भामिनि कृतमत्यर्जावस्मिन्मन्युना । नैकश्चार्थो भगशब्दस्य । गच्छत्वेष प्रयच्छ कौपीनम् । आवामितो गच्छावः । अन्यतो गत्वा विलोक्य । सखे पश्य विस्तीर्णतरकदलीगर्भदलविरचितभाजनान्तरसंभृतरविकरसंतापविलीनघृतबिन्दुनिष्पन्दशङ्कया निभृतकृतचरणविन्यासः दक्षिणेतरभुजशिरोदेशलम्बमानपटच्चरग्रन्थिरन्ध्रपरिच्यवमानविविधधान्यनिरोधनव्यापारितदक्षिणकरतया शिथिलीकृतकक्षविवरपरिपतत्पटोलकोशातकीनियन्त्रणसंकुचितविकटकटितटस्त्रंसमानराङ्कवपटखण्डसम्पादितवहुवैकक्ष्यः कण्ठलोलवितितकरवीरमाल्यपरिकल्पितहृदयकलितमलयजातपङ्कप-

रिमोषः विभिन्नललाटविक्षरितरक्तधारासीमन्तितकपोलनासिकोऽपि नव-नप्रसादविशेषानुमीयमानमतिवेलमन्तःप्रमोदमादधानः विस्नस्तशिखागर्भ-निर्गलद्धरिद्राक्षतः कुण्डमुण्कशर्मणो ब्राह्मणस्य मध्यमपुत्रः कम्बलमेढ्र इत एवाभिवर्तते । यावदेनमालापयामि । अये कम्बलमेढ्र त्वमद्य स्फुटित-निटलोऽपि व्यञ्जनैः प्रमुदित इवालक्ष्यसे । कथयाद्य शोकावसरे को हेतुस्ते प्रमोदस्य । किं ब्रवीषि ।

न शस्त्रैरक्षुण्णं रणभुवि न वा वृत्तिकलहे
शिलाभिर्निर्भिन्नं निटिलमिह शोचामि किमिति ।

अपि तु

समुद्यत्तारुण्यद्रविणमदशौण्डेन्दुवदना-
तुलाकोटीकोटिस्फुटकठिनसंघट्टदलितम् ॥ २१७ ॥

इति । मन्दारशेखर किं ब्रवीषि । तर्हि भग्नेऽपि निटिले मग्नोऽसि प्रमोद इति युक्तमेतदिति । सखे त्वयेदं कथमासादितं शुभसान्द्रष्टिकम् । किं ब्रवीषि । अद्याहं हेलावतीस्वसुर्हेमप्रभायाः प्रथमपर्यङ्काधिरोहमहोत्सवे स्वस्तिवाचनकाय गतोऽस्मि । अन्येऽपि तत्र समवेता विलासिनो विलासिन्यश्च । अथ तस्मिन्नुत्सवारम्भे

वीणावेणुमृदङ्गडिण्डिमरवैराकीर्णकर्णामृतै-
र्नृत्यत्कैरववन्धुवन्धुवदनामञ्जीरसीञ्जारवैः ।
शैलूषप्रवरप्रगीतमधुराल्यैर्मदास्योद्गतै-
र्मन्त्रैर्नैकविधैश्च तद्गृहमभूच्छब्दैकतानान्तरम् ॥ २१८ ॥

तदानीं तत्कलकलश्रवणसंजनितभयः संक्षुभितो निकृत्तलोहशृङ्खलो बन्धस्तम्भादुत्प्लुत्य

शश्वत्पक्ष्मनिमीलनैश्च विवृतैर्दन्तैर्नितान्तोन्नम-
द्भ्रूयुग्मैरवलोकनैश्च विकृतैः कुर्वञ्जनोद्वेजनम् ।
मध्यालम्बिनिकृत्तशृङ्खलिकया लाङ्गूलयुग्मभ्रमं
कुर्वन्कोऽपि महाकपिः समपतत्तत्राङ्गनामण्डले ॥ २१९ ॥

ततः

कामांचिद्वसनं निकृष्य जघनात्कामांचिदास्याम्बुजं
दष्ट्वा दन्तमुखैर्विदार्य नखरैः कामांचिदूरुस्तनं ।

कामांचित्कुचभारगर्भितनरान् कृत्वा प्रकीर्याभितः
सिञ्चंस्तत्रसमग्रचन्दनरसांश्चिक्रीड शाखामृगः ॥२२०॥

इति । सश्लाघम् । अये नहीशः केशवोऽपि कीदृशपुण्यमभिवर्णयितुं येन पुनरनायासमीदृशी संपत्तिरनुभूता । भवतु ततस्ततः । किं ब्रवीषि । अथ तत्र व्यतिकरे भयातुरतया परितः पलायमाने तत्रत्यर्योवते समुत्तुङ्गतरकुट्टिमोद्देशादुत्प्लुत्य गच्छन्त्या मानङ्गलीलायास्तुलाकोटिसंघट्टनेन विभिन्नमधःस्थितस्य मे ललाटमिति। सश्लाघम्। धन्योऽसि कम्बलमेदू धन्योऽसि।

उन्निद्रशोणसरसीरुहगर्भभासा
यस्याः पदेन न कदापि वियुज्यते यत् ।
तत्तादृगङ्गदकृतव्रणभालसीम्नो
दूरे तवैव सुकृतं वचसां च सीम्नः ॥ २२१ ॥

ततस्ततः । किं ब्रवीषि ।

मामुद्वीक्ष्य तदैव सा सचकितं हा हेति नेदीयसी
वल्गन्मौक्तिककङ्कणं करतलं वामं निधायावटौ ।
अन्येन स्तनकुम्भघर्मसलिलासंगान्मिलत्सौरभं
हस्तेन त्वरयावलम्ब्य सिचयं चक्रे सृजोमार्जनम्॥२२२॥

इति । अहो श्रोत्रियप्रसूतेस्ते भाग्यपरिणामः !

अद्यापि प्रलुठन्ति हन्त धनिनस्तस्या गृहालिन्दके
ये दातुं प्रभवन्ति काञ्चनगिरिं तन्व्याः सकृद्दर्शने ।
तैरप्राप्यमिदं त्वयाद्य कृतिना श्रेयः समासादितं
पुण्यैरेव समुन्मिषन्ति न पुनर्यत्नेन संपत्तयः ॥ २२३ ॥

गच्छ तावदतिक्रामति यजमानगृहे भोजनावसरः । आवामन्यत्र गच्छावः । अग्रतो गत्वा विलोक्य । पश्य सेयमुपकण्ठोन्मिषद्वाराकंकणाभिरामा सरसतरकायमानाभिदृश्यंदधाना मध्यदेशमतनुकेतनविलोलनेत्राञ्चलसमीरणनिरस्तपान्थजनसंतापा निबिडतरोरुपयोधरकलशविराजमाना संदृश्यते [illegible]म्पाला बाला च तदधिष्ठात्री । एहि क्षणमात्रमत्र विश्रम्य गच्छा- ॥ विलोक्य सहर्षम् ।

नालोदञ्चितपर्वकायमबला निष्पन्दवक्षोरुह-
व्यावृत्तांशुकपल्लवा कलयते पाणौद्य पान्थाञ्जलौ ।

सोऽयं जर्जरिताङ्गुलिर्घनरसासारेक्षणव्याजतः
पश्यन्पीनकुचौ धुनोति न शिरस्तृप्तोऽप्यतृप्तो यथा ॥२२४॥
समुपसृत्य ।
बाले पयोधरवटस्तवहस्तलग्नः
पान्थान्न तोषयति सोऽतनुतापभाजः ।
अन्यस्तुदत्यविरतं वत दृष्टमात्रः

सखे अपवार्य किं ब्रवीषि । सखे पराङ्गनामेवं ब्रुवाणो न कथं बिभेषीति । सखे कुतोऽत्र भीः जगतः कलत्रनिर्विशेषाः खलु प्रपापाल्यः । प्रपापालि सस्मितं किं ब्रवीषि ।

सोऽयं कराकलित एव हि दुःखहेतुः ॥ २२५ ॥

इति । मन्दारशेखर किं ब्रवीषि । सखे पश्चादनया सह संलपिष्यसि रसिकया कथय सपदि मत्सनाथः कुत्रापनयस्येतमातपावेगमिति । प्रपापालि किं ब्रवीषि । अत्रैव ममोपवने विलसत्पृथुलकुचान्तरालस्थले विश्रम्यतां युवाभ्यामिति । सस्मितम् । सुन्दरि यद्यपि त्वया प्रणयानुरूपमाज्ञप्तं तथापि

शुद्धाः शान्तिपयोभृतैकवपुषः कामं गुणैकाश्रया
यत्संवासकृते नितान्तनिशितैर्भिन्नाश्च सूचीमुखैः ।
ते मुक्तामणयोऽपि नैव तदिदं वक्षोजयोस्तेऽन्तरं
प्रापुर्नो शतपत्रपत्रनयने तत्रावकाशः कुतः ॥ २२६ ॥

समन्दस्मितं किं ब्रवीषि । अयि सरसहृदय युक्तमेवेदमधःकृतनायकाः कान्तामणयोऽपि सहृदयान्तरङ्गं नावगाहन्त इति । शृणु विलासिन्यमतमेतदस्माकम् ।

प्रश्नोदञ्चितमौक्तिकं विलुलितस्फूर्जत्तमिस्रोत्करं
लोलत्कामशरासनाटनिनटत्तृङ्गसमाभृद्युगम् ।
तन्वाना ललितं रहः किमपि तत्कृत्वाप्यधो नायका-
न्कैः कान्तामणयः कृताः सहृदयैर्मुखेऽन्तरङ्गाद्बहिः ॥२२७॥

किं ब्रवीषि । का नाम शक्नुयाद्वाक्चातुर्ये तुल्यं भवता समं समारोढुम् । पीयतामत्र बकुलकुसुमासवामोदि कुमुदमित्रोपलामत्रसंवासशीतलममृतम् । विश्राम्यतामातपशान्तिपर्यन्तमिति । सुन्दरि तव वचोमृतेनैव मे सम्प्राप्तं सौहित्यम् । सर्वथा न पिबाम्यमृतं धराहितम् । पृच्छेमं मन्दारशेखरम् ।

मन्दारशेखर किं ब्रवीषि। सत्यमिदं मिथ्योदरि नित्यमयमधराहितममृतमेव पिबति कन्दर्पविलास इति। प्रपापालि समन्दस्मितं किं ब्रवीषि। स्वस्वाम्येकसुलभं तदेतद्वो दुर्लभमेवेति। अयि सुतनु श्रूयताम्

मूर्त्या सेचनकश्रिया निमिषतां ते प्रापिताः स्मो वयं
नाक्रान्ता जरया तवेदृशगिरा नाकं समारोपिताः।
त्वत्पाणिग्रहतो महासवशतस्यासादितं चेत्फलं
स्वस्वामित्वमुपेत्य तादृगमृतं स्वैरं पयामस्तदा॥ २२८॥

किं ब्रवीषि। यद्येवं पुनर्भूपरिग्रहदोषेण नियतमेव निन्दिष्यते भवानिति। सास्मितम्। सुन्दरि कः पनर्भूपरिग्रहे सति साम्राज्यमापन्नो निन्दिष्यते। मन्दारशेखर किं ब्रवीषि। अये कथमियमपत्रपानिरपेक्षं व्याहरति नवयुवतिः। अथ वा

पत्यौ रोगिणि निर्धने च विरसव्यङ्गे प्रपापालिकाः
सैरन्ध्र्यः परवेश्मपाकनिरताः प्रायो भवन्ति स्त्रियः।
तास्तन्वन्ति ततो नियन्तृविरहात्पुम्भिः सहैकासिकां
शीलं तेन विलीयते बत कुतः शीले विलीने त्रपा॥ २२९॥

इति। सखे न वक्तुं युक्तमेवंप्रेमशालिनीष्वस्मद्विधानाम्। प्रपापालि किं ब्रवीषि। वदतु नाम को दोषः। परिहासशीलोऽयं विलासी। अतिथिरसिक कथय किं वाञ्छसि मत्त आतिथ्यमिति। सदर्पम्।

प्रत्यग्रक्षतवेगकम्पितदलं नव्येन्दुरेखाञ्चित-
व्यावल्गत्पटुचक्रवाकयुगलं कञ्जोत्थझञ्झानिलम्।
शङ्खोदीर्णकपोतपोतविरुतं रक्ताजदिन्दीवरं
कालं विक्रममाणकाञ्चनलतं वाञ्छाम्यहं वीक्षितुम्॥ २३०॥

किं ब्रवीषि। तर्हि कदा भवेत्ते पुनरागम इति। यदा भवती समाज्ञापयति। मन्दारशेखर किं ब्रवीषि। सखे किमियमदत्तोत्तरैवोर्ध्वप्रसृताङ्गुलीकं तिर्यक्करं कुचद्वयान्तराले विन्यस्य जोषमास्ते कोकस्तनीति। सखे तेनैव कोकमिथुनविश्लेषकालमेव सङ्केतसमयमावेदयति प्रगल्भेयमिति जानीहि। एहि पुनः सायमागच्छावः। कतिपयपदानि गत्वा वामतोऽवलोक्य। मन्दारशेखर किं ब्रवीषि। सखे केयम्। एतस्याः

वक्त्रे केवलपाण्डिमा विजयते नो चित्रकं दृश्यते

वासःकेशभराङ्गकेषु बहुधा मालिन्यमालक्ष्यते ।
वक्त्रं प्रोषितवल्लभेति तदियं युक्तं न पद्मानना
बीजैः क्रीडति सप्रमोदमधुना यत्कुण्णवृन्तोद्भवैः ॥ २३१ ॥

इति । सखे सुधाकरकलत्रमियमनङ्गरसतरङ्गिणी । सखीभिः सह खेलति कालमतिवाहयितुं रजस्वला । किं ब्रवीषि । किमियं रजस्वला । तर्हि युज्यतेऽस्याः केशाम्बरमालिन्यमाननपाण्डिमा चेति । भवतु सखे एहि क्षणमेकं स्वच्छन्दमनया संलपावः । साश्चर्यं किं ब्रवीषि । अये कथमेवमुच्यते स्वप्नदुर्लभः खलु विटानां परवधूटीभिः स्वच्छन्दसंलाप इति । सखे

पतिभयमूलः सुदृशां विलासिलोकैरसंलापः ।
अनया पटुतरकुचया घटयति कमनान्स्वयं नाथः ॥ २३२ ॥

अतोऽनया युज्यते नः स्वच्छन्दं संलापः । किं ब्रवीषि । अहो न हि पुरुषाः पुरुषान्तरनिरीक्षणमपि क्षमन्ते स्वकलत्रस्य । कथमयं स्वत एव कुपूयपन्थानमवतारयति स्वकलत्रमिति । सखे पतिः क्लीब एतस्याः किं कुर्यात् । किं ब्रवीषि। किमस्याः पतिः क्लीब इति।कुतोऽत्र सन्देहः। सश्लाघं किं ब्रवीषि ।

सेवां दासजनोचितां वितनुते पश्येत्प्रसन्नेति मां
सप्रेमास्तु सदा मयीयमिति च स्त्रं कामनान्नेष्यति ।
कौलीनान्न भयं तथाविधपथे पत्युर्मते वर्तना-
द्धन्यं क्लीबकुटुम्बिनीजनमहं मन्ये धिगन्याः स्त्रियः ॥ २३३ ॥

सखे केचनवर्षवरा अपि गृहबहिर्द्वारदेहलीदर्शनमपि न सहन्ते स्वकलत्रस्येति । कर्णौ पिधाय । शान्तं पापं शान्तं पापम् ।

नामापि तेषां न ग्राह्यं विरम त्वं ततः सखे ।
निबध्नन्ति स्वयं षण्ढा ये पापास्तरुणीजनम् ॥ २३४ ॥

किं ब्रवीषि । सखे किमेतत्

स्थगयति निटिलार्धं पाणिना पद्मभासा
भ्रुवमपि करशाखापल्लवेनाथ वामां ।
वदनमपि पिधत्ते गाढमोष्ठाधरेण
स्फुटपदनमनालं चापि चेलेन बाला ॥ २३५ ॥

किं च

यत्नोदञ्चितदोर्लता निजसखी तिष्ठत्यमुष्याः पुरो
बालेयं परिमातुमुत्क्षिपति यद्वल्गत्कुचक्रीडनम् ।
ऊर्ध्वाधः प्रसरद्दृगुन्नतनतं वक्त्रं तदालोकने
भात्यस्या नमदुन्नमज्जलनवड्ङ्गाभिपातोद्गनैः ॥ २३६॥

इति । सखे सर्वोऽयमस्यां क्रीडायामवान्तरनियमनिर्बन्धः । तस्याः समीपमुपसृत्य । अयि वामनयने

नटत्कचघनस्तनं जघनभूललत्सप्तकी
विलोलमणिकिङ्किणीगणविमुक्तमौनव्रतम् ।
वलग्नवलनोच्चलद्विमलतारहारं हर-
त्यदो रतविशेषवत्सुतनु खेलनं नो मनः ॥ २३७ ॥

सोपालम्भं किं ब्रवीषि ।सत्यमेव कुतोऽहरन्मामकं सुरतं खेलनं वा मनस्ते बहुरसिकवल्लभस्येति । सुतनु कथमजनि मदुक्ते ते विपरीतरसस्फूर्तिः । मन्दारशेखर समन्दस्मितं किं ब्रवीषि । सखे युक्तैव खलु कामिनीनां कामनालोके रतस्फूर्तिरिति । अनङ्गरसतरङ्गिणि किं ब्रवीषि । अद्यायं मे शोभनोदयो दिवसः यत्र स्मृताहमीदृशी कन्दर्पविलासेनेति । सुतनु किमेवं मामुपालभसे । त्वदभिज्ञाधारणेनैव जीवत्यसौ कन्दर्पविलासः । पश्य पश्य । इति ससंभ्रममुरो निरीक्ष्य सविषादम् । हन्त हन्त समापतितः प्रमादः

अभिज्ञानं यत्ते हरिणमदपत्राङ्करमयं
स्थितं वक्षोजातव्यतिकरवितीर्णं हृदि मम ।
तदेतावद्गुप्तं सपदि तव सांनिध्यजनित-
प्रभूतस्वेदाम्भःसमुदयपरिक्षालनहृतम् ॥ २३८ ॥

परं त्वस्ति किंचिदन्तरमभिज्ञानमनुस्मरतु भवती । यदावयोः प्रथमरतावनिवृत्तरतेच्छया भवत्या प्रभातसमये.

म्लानं सुन्दरि कर्णिकाकुवलयं कम्पेन संपातितं
कूजत्कुक्कुटकण्ठकन्दलरवः काञ्चीरवैर्निन्हुतः ।
आयाते हृतनूतनाम्बुजमिलद्गन्धेऽथ मन्दानिले
यद्यद्रोपभयोचितं त्वमकरोस्तत्केन विस्मार्यते ॥ २३९ ॥

किं ब्रवीषि । अयि विलासिनि सकललोकातिलङ्घिनी ते प्रमुषितप्रणयाभिनयपरिस्फूर्तिः । न चेदेवं कथमेवमुपेक्षिता त्वयाहं चिरकालमिति ।

सप्रणयमुपसृत्य । सुदति यद्यहमन्यथा ब्रवीमि तर्हि शपेऽयं त्वदीयलोमलताभुजङ्गिकावमर्शेन । सस्मितं करपृष्ठकृतगगननोदना किं ब्रवीषि । अपसर परतो मा स्पृश मां पुष्पिणीमिति । सोत्कण्ठम् । सुन्दरि यदि तवास्पृश्यत्वे पुष्पमेवोपाधिस्तर्हि वद त्वां पृच्छामि

अम्भोजानि पदं शयश्च वदनं नीलोत्पले लोचने
नासा भासुरहेमपुष्पकलिका दन्ताम्बरं ते जपा ।
दन्तालिर्नवकुन्दकोरकततिर्हासः स्फुरत्कैरवं
नित्यं पुष्पमयाखिलाङ्गि भवती स्पृश्या कदा स्यान्मम ॥ २४० ॥

सस्मितम् । कपोलमंशुकाञ्चलेन संछाद्य किं ब्रवीषि । न बहिरङ्गपुष्पं दोपायेति । मन्दारशेखर किं ब्रवीषि ।

तावत्कुलस्त्रीमर्यादा यावल्लज्जावगुण्ठनम् ।
हृते तस्मिन्कुलस्त्रीभ्यो वरं वेश्याङ्गनाजनः ॥ २४१ ॥

इति । सुन्दरि सक्रोधवैलक्ष्यं किं ब्रवीषि । अयि सरसहृदय सत्यमाह ते मित्रम् ।

धनाशा कैतवस्नेहो वितर्थश्चित्ततोषणम् ।
एकमप्यस्ति नास्मासु कथं वेश्याधिका वयम् ॥ २४२ ॥

अलमधुनाकदर्यजल्पनसंलापेन गच्छामीति । विलोक्य सविषादम् । हन्त हन्त गतैव सखे हरिणाक्षी । त्वयैवं प्रणयिनि जने वैरस्यमापादयता कृतः खलु कलशकरीरे जम्बीररससेकः । भवतु पश्चादहमेवागत्य कोपमस्याः परिहरिष्यामि । एहि गच्छावः । अग्रतो गत्वा विलोक्य ।

पाटीरगौरातिमनोज्ञशाटी
चेटीकरग्राहितचारुवीटी ।
धाटीजिताम्भोरुहजातघोटी
का टीकते तूर्णमितो वधूटी ॥ २४३ ॥

निपुणं निरूप्य । इयं खलु सुधालहर्याः कनीयसी चमत्कारवैखरी । यावदेनामालापयामि । प्रिये चमत्कारवैखरि क्व गच्छसीदानीमेतावता त्वरितगमनेन । किं ब्रवीषि । संप्रति संप्रवर्तमाने वसन्तोत्सवे मत्स्याङ्कमभिपूजयितुं गता मे भगिन्यादयो विलासिन्यः कुसुमाकरविश्राममारामम् । अतोऽहमपि तत्रैव गच्छामीति । सुन्दरि क्षणं विलम्ब्यतां सहैव

गच्छामः । किं ब्रवीषि । अयि रसिक कृतमत्र मे गतिप्रतिरोधेन नवं पचति मितंपचो मे वसन्तदिवस इति । सुन्दरि न सांप्रतं ते प्रियैकपक्षपातिन्याः प्रियाविशेषे वसन्तवासरे विद्वेषः ।

श्रोणीसंगतमम्बरं न सहते न त्वज्जनानां तनोः
संपर्कं क्षमते ददाति न मनाङ्निद्रातुमेकं क्षणम् ।
कस्तूरीकलितानुबोधमुरसो दूरीकरोत्यङ्गने
चित्तेशोऽपि तथा वसन्तसमयः को नाम भेदस्तयोः ॥ २४४ ॥

भवतु गच्छ तावदावामपि तत्रैवागच्छावः। कतिपयपदानि गत्वा निरूप्य। सखे पुरः पश्य मलयानिलचलितललितलवङ्गलतावितत‍कुसुमरसासारसंपातमसृणतरतुषारकिरणशिलातलसंचरणसमयनिःसरच्चरणपरिपतन्नितम्बिनीसमुद्धरणसरभसप्रसारितकरतरुणविलासिनखमुखविरचितपयोधरभरपरिसरव्रणवेदनाकृतसीत्कृतिव्यतिकरितरणितमणिकङ्कणविराजमानहस्तविहतविकलमालतीलतान्तसमुत्पतद्विहस्तमत्तमधुकरनिकरसंपातशिथिलितरसालमञ्जरीपुञ्जविकीर्णपरागपूरदूषितविलोचनव्याकुलकोकिलकुलकलकलमुखरितान्तरालसीमान्तमेनमारामम् । सखे किं ब्रवीषि ।

तीव्रपतन्नखविकलितगणिकालिकुचाभिरामपत्रश्रीः ।
त्वमिव विभाति पुरस्तादारामः सोऽयमत्र विहारावः ॥ २४५ ॥

नाट्येन वनं प्रविश्य परितोऽवलोक्य। अये सपदि खलु सफलं मे चक्षुरेतद्दर्शनेन ।

अन्योन्यस्तनताडिताः स्तनतटप्रभ्रष्टमुक्तासरा
गाढाश्लिष्टपरस्परोरुयुगला लोलद्दुकूलाञ्चलाः ।
वल्गद्वेणिलताः कलं प्रतिकलं सिञ्जत्तुलाकोटयो
विन्दन्त्यत्र सरोजपत्रनयना हिन्दोललीलासुखम् ॥ २४६ ॥

अन्यतो गत्वा विलोक्य । इतः पश्य सखे कृतमितारालोकनेन ।

दीर्वोदञ्चितमध्यलुप्तवलयः संदृश्यनाभीगुहाः
पादाग्रस्थितिवेपमानचरणा वल्गद्गुरुश्रोणयः ।
शश्वद्वृन्तनिकृन्तनावधिरणद्रत्नोल्लसत्कङ्कणाः
प्रोद्यद्वल्कलकुचा जयन्ति सुदृशां पुष्पावचायक्रियाः ॥ २४७ ॥

परिक्रम्यावलोक्य सहर्षम् । अये साप्यत्रैव कुसुमान्यवचिनोति पत्त्ररथपत्त्रपुत्रकलत्राविभ्रमा विभ्रमतरङ्गिणी । यावदेनामुपसर्पामि । उपसृत्य । मुग्धे

कृतं ते कुसुमावचयसाहसेन । यदि हितं मे न शृणोषि वचनं तदा

फुल्लेन्दीवरपद्मरक्तकश्रिया नेत्रास्यदन्ताम्बरे
लोलम्बान्यततो निवारयतु ते नासालसच्चम्पकम् ।
अन्त्ये संप्रति संनिपत्य दशतो बिम्बप्रवालभ्रमा-
न्मुग्धे कीरपिकान्निवार्य भवतीं त्रातुं पटुः को भवेत् ॥२४८॥

अनादरमिव किं ब्रवीषि ।

क्षणविरचितहर्षे केवलं वाग्विलासैः
कलयति मुखरागं चैकतः पक्षपातम् ।
दशति रदनवासो मामकं त्वादृशो वा
शठ क इव विशेषः कोकिले वा शुके वा ॥ २४९ ॥

इति । आत्मगतम् । अये मामियामन्यसंगादात्मनि शिथिलरागानुबन्धं मन्वाना साकूतवचोभिरधिक्षिपति पक्ष्मलाक्षी । तदेनामन्यतो नयामि । प्रकाशम् । अयि विलासिनि विकचाः कान्ताः सुमनसः कराङ्कगता विहाय किमन्वेष्टुमिच्छसि कोरकप्रकरम् । साकूतस्मितं किं ब्रवीषि । तादृश्यस्तास्तुभ्यमेव रोचन्ते नास्मभ्यमिति । अलमबले परिहासेन । अहमपि श्वो देवतार्हणार्थमवचिनोमि कुसुमविसरम् । विभ्रमतरङ्गिणि किं ब्रवीषि । अये कुसुममदेवतार्हं वदन्ति पर्युषितम् । अतः सद्यस्तनमेनं गृहीत्वा किं न पूजयसि कामं त्वं देवमिति । सहर्षस्मितम् । प्रिये त्वदाज्ञप्तं मे नातिलङ्घनीयम् । अतस्तथैव करिष्यामि । कुचं तस्याः करेण निपीड्य सशिरःकम्पम्

कलशकन्दुकचक्रचया मया
परिचिता मदिराक्षि सहस्रशः ।
ममृणवर्तुलकर्कशतेदृशी
बत न तेषु न तेषु न तेष्वपि ॥ २५० ॥

अयि मुग्धे सभ्रूभङ्गं किं ब्रवीषि । गच्छ गच्छ शठ । अमुना ते कृतमसमञ्जसचेष्टितेनेति । अयि भामिनि स्वयमेव स्तनग्रहणेन सद्यः कामदेवार्चनं समादिश्य किमेवं मुधा कुप्यसि । भवतु तर्हि प्रशान्तकोपां भवतीं सायमनुसरिष्यामि । पदान्तरं गत्वा पुरः पार्श्वयोश्चावलोक्य ससंभ्रमम् । सखे पश्य दक्षिणतः

कान्तागण्डूषभीत्या कृतकृतकमरोलङ्घनस्तत्र काचि-
द्भ्रष्टं स्वीयोत्तरीयं त्वरितमनुपतन्धावमानो गृहीत्वा ।
अन्या रुद्धोत्तरा तां किमपि च सरलां वञ्चयित्वा समञ्च-
न्नाकृष्टोऽयं पराभिर्विहरति तरुणीमण्डले कोऽपि धन्यः ॥ २९१ ॥

निपुणं निरूप्य सहर्षम् । अये सोऽयं प्रियमित्रं नौ मदनमङ्गलः । न चे-त्कः पुनरीदृशभाग्यपात्रमन्यो विलासी । एहि तावदमेन सह स्वैरमारामे विहरावः । उपसृत्य । सखे मदनमङ्गल किमावामपि न पश्यसि नेदीयांसौ प्रेयसीगणविलासरसमग्नः । विलोक्य सहर्षं किं ब्रवीषि । कथं प्रियमित्रे मे कन्दर्पविलासमन्दारशेखरौ । अये वयमनल्पकालसमवेताः क्षणमात्रमत्र नलिनीपत्रास्तरे शारदतरुनिकरमारात्सहासिकासुखमनुभविष्याम इति । सखे तदिदमावयोरप्यभिलषितम् । तं हस्ते गृहीत्वा । सखे एह्युपविशावः । यथोक्तं कृत्वा । मदनमङ्गल निपुणं मां निरूप्य किं ब्रवीषि ।

अविश्रान्तः श्वासो वदनमतिशुष्कं तव सखे
भृशालस्या दृष्टिर्विषयमनुबद्धा न चलति ।
समस्तं त्वास्तां तत्प्रभवति हि हेत्वन्तरवशा-
त्कपोले धावल्यं कथयति रहस्यं किमपि मे ॥ २९२ ॥

तत्कथय कया पुनरिदं पदमवतारितो मे वयस्य इति । साश्चर्यम् । अये प्रयत्ननिगूहितोऽपि कथमनेन विज्ञातो मे विप्रलम्भविकारः । मन्दारशेखर किं ब्रवीषि । सखे कथं तर्हि

अनुक्तमप्यूहति पण्डितो जनः ॥

इति वचनमयथातथमिति । सविषादवैलक्ष्यम् । सखे मदनमङ्गल किमिह कृतेन वाकृतेन दुर्लभजनानुरागप्रस्तावेन । तथापि प्रष्टरि सुहृदि भवादृशे न सांप्रतमुपेक्षेति कथयामि श्रूयताम् । पुरैकदा शृङ्गारचपकमुख्यैः सखिभिः शुक्लसितपञ्चदश्यां न्यग्रोधयात्राविलोकनकुतूहलेन पुरपरिसरसरस्तीरमुपागमम् । यस्य च नातिदूरे न्यग्रोधमूलभुवि समार्चिता पुरन्ध्रीभिर्भगवती सावित्री । ततः

तत्रागताः समदसिन्धुरमन्दयाना
नानाविधाम्बरविभूषणभूषिताङ्ग्यः ।

विद्युल्लता इव तपान्तघनापविद्धाः
पूजोपहारपरिसंभृतपात्रहस्ताः ॥ २९३ ॥

सखे किं कथयामि । तदानीं

पूजापरिक्रमनमस्कृतिदानमुख्य-
तत्तत्क्रियोचिततथाविधविभ्रमैस्तैः ।
ताभिर्निरस्तविषयान्तरचित्तवृत्ति-
र्गाढं प्रमोदजलधौ विनिमज्जितोऽस्मि ॥ २९४ ॥

अथ विविधपूजासम्भारभरितकनकभाजनकराभिः कतिपयसुवेषयोषाभिः परिवारिता कापि नितम्बिनी

अन्तर्दृश्यार्धहारं तनुतरसिचयं वामवक्षोजकुम्भा-
दासज्यांसे तदन्यं शशिधवलसत्कञ्चुकाबद्धमुग्रम् ।
वक्षोजं दर्शयन्ती प्रपदधुतचलच्चेलविन्यस्तदृष्टिः
श्रोणीभारालसापि त्वरितमुपगता स्वर्णभृङ्गारहस्ता ॥ २९५ ॥

सखे कथं तां वर्णयामि न खलु मुखे मे जिह्वासहस्रम् । पश्यसि चेज्जानासि स्वयमेव तद्रूपमासेचनकम् । किं तु तदानीं

अम्भोजासननिर्मितां क्षणचलां न्यक्कृत्य विद्युल्लतां
पञ्चास्त्रेण विनिर्मिता भुवि किमु स्थानुस्तडित्काप्यसौ ।
नेत्राग्निग्लपनासहिष्णुरथ वा चान्द्रीकला धूर्जटेः
संप्राप्ता किमिहेत्यतर्कि हृदि तामध्यक्षयद्भिर्जनैः ॥ २९६ ॥

अथ सा सुन्दरी मन्दं मन्दं न्यग्रोधमूलतलमुपेत्य परिजनवितीर्णकनकमयकमनीयविष्टरसीम्नि चरणतलसमाश्लिष्टधरणीमण्डलैवोपविश्य दक्षिणजानुदेशसमावेशितबाहुमूला सव्यकरसरोजसमालम्बितवामचरणाग्रसीमा पार्श्वस्थितसैरन्ध्रिकाजनसमर्पितपूजोपकरणग्रहणसमयसिञ्जानमञ्जुमणिकङ्कणाऽऽचार्यमुखमिति कर्तव्यतोपदेशेषु गन्धादिभाजनानि च गन्धाद्युपादानेषु देवताधिष्ठानमुचितोपचारकल्पनायां कुचान्तरालसीमानमवान्तरपूजाविरामेषु सलीलमनुक्षणमीक्षमाणा तत्राभिमतदेवतामभिपूजयन्तीतत्क्षणमपजहार मनो मदीयमयस्कान्त इव कालायसक्षोदम् । ततः

मदालसपदार्पणे लुठदुदारतारावलि
प्रमृष्टवलिमोदरस्थलविकीर्णरोमावलि ।
परिक्रमशतं ततः प्रविरचय्य नत्वा मुहुः

स्वगेहगमनोद्यता बत बभूव सा सुन्दरी ॥२९७॥

तदानीं तामभिमुखीकर्तुकामेन मयाकाण्ड एवोच्चैराह्वानशब्दो विसृष्टः कमपि विदूरवर्तिनं परिचितपूर्वं प्रति पृथग्जनम् । अथ तमाकर्ण्य ससंभ्रमविभ्रमं मनागिव विवर्त्य वदनाम्बुजं

जीवंजीवसहोदरे दरदलत्पाथोजगर्वापहे
नीलेन्दीवरसुन्दरे निजकलाखञ्जीभवत्खञ्जने ।
प्रोष्ठीसौष्टवभाजने शशिमुखी विस्फार्य सा लोचने
दृष्टिं मन्मथरिष्टिभासहचरीं स्तोकं मयि व्याकिरत्॥ २९८॥

आलोडितेव सा रक्तभित्ते रागिणि मामके ।
एकीभूता पृथग्जाता सखे नाद्यापि सुन्दरी ॥ २९९ ॥

ततः सा

अनुरागमयीं विसृज्य मूर्तिं
मम चित्ते गतिनुत्तराजहंसी ।
चलिता ललितं विलोक्य पश्चा-
त्सहसा विस्मृतदर्शनच्छलेन ॥ २६० ॥

किं ब्रवीषि । सखे कथमिवाजनि त्वयि तावतैवानुरागप्रत्ययस्तन्वङ्ग्या इति। सखे अस्ति किंचिदनुरागप्रत्ययनिमित्तं मत्तकाशिन्याः । किं ब्रवीषि कथय सखे श्रोतुमुत्सहते मे मानसमिति । शृणु कथयामि ।

संलापाय सखीजने परिजने चित्तानुवृत्यादरा-
ल्लोकेऽन्यत्र मनोज्ञविभ्रमवशादास्यं निजं पश्यति ।
द्वित्रास्तत्र तया प्रतारितजनालोकं मयि प्रेरिताः
स्निग्धापाङ्गदृशस्ततो मनसि तां मन्येऽनुरक्तामहम् ॥ २६१ ॥

किं ब्रवीषि । तर्हि स्थान एवानुरागप्रत्ययस्तन्वङ्ग्याः । भवतु ततस्तत इति । ततस्तामहं गृहबहिर्द्वारदेहलीपर्यन्तमारादनुवर्तमानो निजचित्तवृत्तिमस्याः परिजनीकृत्य मत्तकाशिन्याः गात्रमात्रसहायः कथमपि ततो निवृत्तोऽस्मि । तदाप्रभृति निजमनोरथघटनापटीयांसमाप्ततमं जनमन्वेषयन्नप्यलब्धमनोरथोऽहं निरन्तरमनुभवाम्यैतादृशीं समवस्थाम् । परिवृत्यावलोक्य । अये कथमत्रैव वर्तते कमनज्योत्स्ना । यावदेनामालापयामि। अयि कमनज्योत्स्ने कदात्रागतासि त्रिभिरप्यस्माभिरनालक्षिता ।

अनाकर्णितकेन किं ब्रवीषि । विजयतामनुक्रोशलेशाविधुरः कन्दर्पविलासः ।

उपेक्षारसनापीतरक्तकान्तासुमारुते ।
भुजङ्गशब्दो रसिक नूनमेवार्थवांस्त्वयि ॥ २६२ ॥

इति । सहर्षोत्सुक्यम् । अयि कमनज्योत्स्ने मदुपालम्भगर्भोऽपि तावकवचनसन्दर्भोऽयमनुरक्तकान्तागमपिशुनो मे समास्वाद्यतापदमधिरोहति मत्स्याण्डिकाप्रचुर इव कटुम्भराक्षोदः । तत्कथय का नाम रक्ता मया समुपेक्षिता । सोत्प्रासं किं ब्रवीषि । अहो आश्चर्यमेतत् द्वित्रास्तत्र या प्रतारितजनालोकं त्वयि प्रेरिताः स्निग्धापाङ्गदृशः कथं शशिमुखी सैतावता विस्मृतेति । सहर्षमात्मगतम् । अयि कियान्मयि विधेः पक्षपातः। यः पुनरेवमेतस्या मुखेन सपदि पीयूषमयान्यक्षराणि श्रावयति । अथवा किमियं मां मिथ्याप्रत्याशादर्शनेन प्रतारयति । न जानेहं परिहासशीला । भवतु तावदेवं ब्रवीमि । प्रकाशम् । अयि कमनज्योत्स्ने किं फलं तवामुना परिहासेन । किं ब्रवीषि । निसर्ग एवायं धूर्तानां ये पुनरनीहितं परिहासपदेन परिहरन्तीति । मदनमङ्गल किं ब्रवीषि । सुतनु मैवं वादीः । वाञ्छितमेवात्मनः परिहासशङ्कोत्थापनेन दूढयति मे वयस्य इति । मन्दारशेखर सहर्षौत्सुक्यं किं ब्रवीषि। अयि कमनज्योत्स्ने सत्यमेव सख्युर्मे समुपेक्षा तां बाधत इति । कमनज्योत्स्ने सोपालम्भं किं ब्रवीषि। अयि कठिणहृदय कन्दर्पविलास मित्रमसीत्येवं ब्रवीमि किमुच्यते बाधत इति । श्रृणु तावदवहितः ।

अस्योपेक्षाकपटसविषक्रूरनाराचदीर्णे
तस्याश्चित्ते युगपदिषवो मान्मथाः संपतन्तः ।
रुन्धन्ति द्राक्तदपि लवशो मूर्तमप्यन्यथा चे-
त्किं पुष्पाणां भवति पटिमा पाटने वा तृणानाम् ॥ २६३ ॥

अये किं कथयामि मदनदवानलप्लुष्टशरीरयष्टेस्तस्यास्तां समवस्थां । कुशला खलु समिन्तिनी ।

पीनोत्तुङ्गस्तनकलशयोस्तारहारं न धत्ते
हस्तेनापि स्पृशति सहसा नैव कर्पूरवीटीम् ।
मञ्चं नापि श्रयति शयितुं हंसतूलास्तराढ्यां

ताद्दक्तन्वी गुरुजनभयाद्रोप्तुकामा स्वतापम् ॥ २६४ ॥

किं च

गण्डे पाण्डौ कलयति पुनश्चान्दनान्पत्त्रभङ्गा-
न्निद्रालाभे स्वयमरुणदृक्प्रच्छति त्वान्निदानम् ।
प्रत्यासन्ने मधुरलपिते गृह्यके कीरशावे
कण्ठे धत्ते कमलनयना चारुवैदूर्यहारम् ॥ २६५ ॥

इति । कमनज्योत्स्ने कथमिदमवगतं भवत्या। किं ब्रवीषि। शृणु कथयामि । सा किल कलहंसगमना कुलदैवतयात्रार्थमारतनंभयस्थविरं प्रस्थितेषु स्वजनेषु स्वयमनिवार्यतरमदनवेदना शिरोवेदनाव्याजेन सदनावस्थितिमनुननाथ स्वनाथमिति। सत्यमसुखिताय मनसे न रोचत एवोत्सवारम्भः। कथ्यतामथ तत्पतिना किमादिष्टम्। किं ब्रवीषि। तेन तथेति कतिपयभुनिष्याजनं तद्रोपने समादिश्य तथैव प्रस्थितमिति । अन्तर्ज्वरयं वैधेयः । भवतु ततस्तया किं व्यवसितम्। किं ब्रवीषि। ततः सा दुर्निवारतरमदनशरसंपातवेदनामसहमाना तत्र तत्र चिरकर्तव्ये कर्मणि परिजनमशेषं नियोज्य सदनोद्यानमात्मनस्तापापनोदहेतोः प्राविशत्। तदानीमहमपि विदितवृत्तान्ता तत्रारामे प्रविश्य तस्याश्चरित्रमवगन्तुकामा केसरतरुतिरोहितशरीरा न्यवसमिति । किं ते सा परिचितपूर्वा पर्वेन्दुमुखी । किं ब्रवीषि। अयि किमुच्यते मदीयहृदयाददवीयसी सुदती सा मे वयस्येति। भवतु ततस्ततः । किं ब्रवीषि । ततः सा शातोदरी

पञ्चत्वं यान्तु बाणाः समयपरिणतस्ते विदिर्णोऽस्तु चापः
क्रूरक्रूराहिवक्त्रे विशतु तव रथो मा भव त्वं शरीरी ।

अथ वा

किं ते शापेन माद्दग्युवतिवधमहापातकिन्मीनकेतो
शप्यः पाथोजयोनिः स खलु रचितवान्पापिनो दीर्घमायुः॥ २६६ ॥

मन्दारशेखर किं ब्रवीषि। सखे क्वापि सा न हि निसर्गादधिकं शशाप सरलहृदयेति। कमनज्योत्स्ने किं ब्रवीषि। इति कृतमदनोपालम्भा स्वहस्तनलिनोपचितनलिनीपत्रास्तरे सन्तापनिवारणाय कलेवरमपातयत् । तेन पुनरुक्तसन्तापा पुनरेवमूचे हरिणाक्षी

नलिनच्छद तापहं भवन्तं

वदता हन्त जनेन वञ्चिताहम् ।
अभजं कुरुषे त्वमङ्गदाहं
सविमर्शम् ।
न दहर्हन्त कथं कृपीटयोने ॥ २६७ ॥

इति सा विलप्य नयनसलिलेन सह नलिनशयनमप्युत्सृज्य स्वप्राणप्रहाणाय मतिं व्यतनोदिति । सविषादोच्छ्वासम् । धिगिमं मां नृशंसम् ।

क्रूरं प्रशंसति विषं सकलोऽपि लोक-
स्तच्चर्वितं हरति जीवितमन्यथा नो ।
क्रूरस्ततोऽपि नितरामहमेव यस्मा-
त्प्राणान्हरामि तव सुन्दरि दृष्टमात्रः ॥ २६८ ॥

मन्दारशेखर किं ब्रवीषि । कमनज्योत्स्ने ततः परं किं संवृत्तमिति । सदैन्यम् । आये कठिणहृदय मा पृच्छैनामनन्तरवृत्तान्तमहं श्रोतुं बिभेमि । कमनज्योत्स्ने किं ब्रवीषि । अये किं कथयाम्यसुत्यागसाहसिक्यं तत्तस्यास्तन्वङ्ग्याः ।

चलति ललितवाते पद्मसम्पर्कशीते
सिचयमथ निरस्य............
सजति मधुरनादं कोकिले बालचूते
त्वरितमनुससार श्रोत्रमग्रेऽर्पयन्ती ॥ २६९ ॥

इति । सबाष्पगद्गदम् । हा हन्त प्रियतमे दारुणोऽयमहमेव निमित्तं ते जिवितात्यये । न चेदेवम्

सितांशुः शीतांशुर्मलयपवनोऽतीवशिशिरः
स्मरो रत्या युक्तो मधुरधिगतोदारसुमनाः ।
कुतस्ते बाधेरन्सहजसरलास्त्वां प्रियतमे
हराम्येष प्राणान्सहजकुटिलोऽहं हृदि वसन् ॥ २७० ॥

कमनज्योत्स्ने किं ब्रवीषि। अलं ते परिदेवनकार्पण्येन । तदनन्तरवृत्तान्तमाकर्ण्यताम् । ततोऽहमसाम्प्रतं विलम्ब इति निश्चित्य ससंभ्रममुपसृत्य करे तां गृहीत्वाबलमबले तवैवंविधसाहसांध्रुविलङ्घनेनेत्यवोचम् । तत्क्षणमेव सा मामुद्वीक्ष्य विलक्षमुखी चकिता लज्जिता च बभूव । तदानीं मयेत्थमुदीरितं

अयि प्रियसखि। दारा गुरोः किमभजत्शशिनं न तारा
स्वाराज्यधुर्यमपि गौतमधर्मपत्नी ।
सृष्टा त्वयाद्य पदवी किमियं नवीना
पूर्वार्चितां सरणिमेत्य विलज्जसे किम् ॥ २७१ ॥

तत्कथय यदि मयि ते विस्रम्भः को नाम मनसस्ते पश्यतोहरो विलासी यदर्थं भवत्यामीदृशदशा स्वकीयं प्रथयति स्वामित्वमव्याहतामिति । तदानीं प्रसादसुमुखी मामालोक्य स्तोकं विहस्य

वेत्ति स्मरत्परमिदं सखि मे रहस्यं
चित्रं न तद्वसति चेतसि सन्ततं यत् ।
त्वं वेत्सि चित्तगतमेतदतीवचित्रं

अथ वा

धीशालिनामविषयोऽस्ति धियो न किंचित् ॥ २७२ ॥

सखि तथापि लज्जेऽहमीदृशचारित्रमात्मनो भवत्यामपि निवेदयितुमित्युक्त्वा विरराम। अथ मया शपथसहस्रैर्निबध्यमानया तयेत्थमुदीरितम् अयि किं कथयामि मन्दभाग्याहम् । अतीतायां शुक्रसितपञ्चदश्यां न्यग्रोधमूलभुवि भगवतीं सावित्रीमभ्यर्च्य विनिवृत्तायां मयि तदानीं कोऽपि विलासी मामभिमुखीकर्तुकाम एव निष्कारणमेकमाजुहावोच्चैस्तरां प्राकृतजनमिति । मन्दारशेखर सश्लाघं किं ब्रवीषि। अये कुशलासि कलहंसलीले सम्यग्ज्ञातमाकूतं त्वया मे वयस्यस्येति । कमनज्योत्स्ने ततः सा किमाह । किं ब्रवीषि। एवमाह

द्राक्षामरन्दमाक्षिकपीयूषैरप्यलब्धमाधुर्यः ।
तस्य स कोऽपि निनादस्तदभिमुखं मन्मुखं चक्रे ॥ २७३॥

अथ मया सोऽयं विलासी

कौसुम्भोष्णीषलोलद्विकचविचकिलापीडसंताडितांसो
वीटीरक्ताधरोष्ठो घुसृणरसलसच्चित्रकोदारभालः ।
स्तोकं जल्पन्वयस्यै किमपि परिहसन्नन्तरा मां प्रपश्य-
न्दृष्टो हस्तेन पुष्पस्रजमुपरि परिप्रक्षिपन्नाददानः ॥२७४॥

तदानीं

निशातानुद्वीक्ष्य प्रमवशरबाणान्निपततः

प्रपेदे त्रातारं तमतिभयलोलं मम मनः ।
तदद्याप्यङ्गेषु भ्रमदपि तदीयेषु बहुधा
न विश्रान्तिं क्वापि व्रजति न परावर्तत इतः ॥ २७५ ॥

इति । सहर्षाहंकारम् ।

पञ्चापि मुञ्च मयि पञ्चशराशु बाणा-
न्पञ्चत्वमेतु वपुरद्य निसर्गलोलम् ।
एतावताद्य न बिभेमि यतः प्रियाया-
श्चित्ते वसन्नमृत एव मृतोऽपि धन्यः ॥२७६॥

भवतु ततस्ततः । किं ब्रवीषि । इत्युदीर्य सा क्षणमात्रं निश्वस्य पुनरेवं व्याजहार । सखि किं कथयामि तस्य विलासिनः प्रथमावलोकनात्प्रभृतिक्रूरतरस्मरशरसंतापितहृदयाया मे दुस्थताम् ।

निगूढः संतापः कलयति हृदुन्मूलनहतं
प्रवाहः संरुद्धस्तटमिव मिलद्भूरिसिकतम् ।
सविस्रम्भेऽपीदं गदितुमथ शङ्के सखिजने
कुलस्त्रीणां छाया यदपि भयहेतुः स्ववपुषः ॥ २७७ ॥

हा हन्त कठिनहृदयः खलु पुरुषलोकः ।

अन्यथा

मामेवं किमुपेक्षते स रसिकः ————

अथ वा

———— नो वेत्ति किं मे दशां

सनिश्वासम् । यद्येवं कः पुनरितो वदेत्तस्य मे दुरवस्थाम् । सविमर्शम् ।

तत्र ज्ञातदशेन किं नु वसता चित्तेन नावेदितम् ।

सविषादम् । अये विरलाः खलु परव्यसनेन व्यसनिनः । अतो मनः कुतः कथयेत् । पुनः सविमर्शम् ।

चित्तं वा न वदेत्कथं ————

सदैन्यम् । तेन मे कः संबन्धः । पुनः सविमर्शम् ।

————मम पुनस्तन्मेन्तरङ्गं न किं

सबाष्पगद्गदम् । अलमन्येन विचारेण

नूनं पञ्चशरेण तच्छितशरैर्हा हान्तरा चूर्णितम् ॥ २७८ ॥

इत्युदीर्य कश्मलमुपागतां तां विविधोपचारैः संधुक्षितचेतनां विधाय सखि मा विषीद कथय तस्य विलासिनो यत्किंचिदभिज्ञानम् । अहमेव तमिह समानीय त्वया सह संघटयामि । इति भाषमाणायां मयि संप्रहृष्टाशया सा पुनरेवं व्याजहार अयि किं कथयामि

लावण्यश्रीप्रवेणिर्विलसति किमपि श्यामला श्मश्रुरेखा
कर्णाभ्यर्णे विलोलं कलयति वसतिं किं च नेत्राञ्चलं च ।
एतावत्तस्य जाने विसृमरविलसत्कान्तिपूरे शरीरे
द्रष्टुं मे क्वावकाशः सखि कथय तदा भीतिलज्जाहृतायाः ॥ २७९॥

इतीदमाकर्ण्य सखि किमनेन साधारणेन कथय किंचिदसाधारणमित्यवोचमिति । मन्दारशेखर किं ब्रवीषि । कमनज्योत्स्ने तदेतत्प्रष्टव्यमेव निपुणमपृच्छ इति । कमनज्योत्स्ने ततः सा किमाह । किं ब्रवीषि । अथ सा नभःस्थले निभृतनिहितवामदृष्टिः क्षणमेकं विचिन्त्य

अङ्को यथा भगवतः शशलाञ्छनस्य
चिन्हं किमप्युरसि दक्षिणतोऽस्ति तस्य ।
अंसाद्विलासगलिते प्रतनूत्तरीये
दृष्टं मनागपि मया तनुकान्तिमग्नम् ॥ २८० ॥

इति व्याजहार । तेनाहमेवंविधाभिज्ञानोपलक्षितः कन्दर्पविलासादन्योऽत्र नास्ति विलासीति निश्चित्य तां सखीमकारणकारुणिकाया भद्रजटायाः करे निक्षिप्य त्वदन्तिकमुपागतास्मि । दैवादिदानीमपकृतपरिश्रमा प्रियसख्यां प्रणयवन्तं भवन्तमवेदिषं चेति । मन्दारशेखर किं ब्रवीषि । सखे भवान्दिष्ट्या वर्धते । यतस्ते वाञ्छितार्थघटनायां धृतपरिकरा भगवती भद्रजटा सखी चेयं कमनज्योत्स्नेति । सखे नातिचरतु ते व्यवहाराभिधेयः । हस्तादवतीर्य मणिकटकमर्पयन् । अयि प्रियाप्रियसखि निसर्गदयार्द्रहृदये किं दातुमिशे तवैवंविधोपकारानुरूपमहं पारितोषिकम् । तथापि गृहाणेमं मणिवलयममृतांशुरिव सलिलार्घ्यम् । अयि सहर्षप्रश्रयं किं ब्रवीषि । अयि सरसहृदय मन्येऽहमात्मनः प्रियसखीजनमनुस्पृशन्तं तावकमनुरागमुपलभ्यमानमेव पूर्णपात्रशतादतिरिक्तम । अतः किं मे मणिवलयेन । तथापि न लङ्घनीयस्तवायं प्रसादः । तावदत्र सखिसनाथेन भवता सुस्थितेन भवितव्यं यावदहं ते प्रियान्तिकात्पुन-

रागमिष्यामीति । सहर्षम् । गच्छ गच्छ सन्तु शिवास्ते पन्थानः । अ-व्याहतं चिकीर्षितम् । त्वमपि तत्रैव गच्छ वयमितः सरस्तीरे माधवी-मण्डपमनुसरिष्यामः । कतिपयपदानि गत्वा श्रवणमभिनीय । कोऽयमितः स्त्रीजनाक्रन्द इव श्रूयते । अग्रतो गत्वा विलोक्य । यावदाभिमुखमापत-न्तीं कलभाषिणीमाहूय पृच्छामि । अये कस्यायमाक्रन्दः । किं ब्रवी-षि । किं कथयामि संताडयति हताशो भार्यामसूयाग्रन्थिरस्तस्यायमा-क्रन्द इति । को हेतुरस्य संताडने तन्वङ्ग्याः । अनादरमिव किं ब्रवी-षि । को वेद तस्य दुराचारस्य चरित्रम् । त्वमेव पृच्छ गच्छेति । भव-तु तमहं साक्षादेव पृच्छामि । गत्वा विलोक्य ।

कषन्दन्तैर्दन्तान्मुहुरथ दशन्दन्तवसनं
सहुंकारं पश्यन्विकटविवृताताम्रनयनः ।
शापमुच्चैर्मध्ये किमपि विरमन्नुद्यतकशः
प्रधावन्तीं विष्वक्प्रहरति स एनामनुसरन् ॥ २८१ ॥

भवत्वेनं निवारयामि । उपसृत्य करे तं गृहीत्वा । जडमते किमर्थं ताडयसि धर्मदारान् । सविषादं किं ब्रवीषि । महानुभाव किं कथयामि

सूते सुतान्प्रतिसमं प्रतिवेशिनी मे ।
नाद्याप्यसूत तनयं गृहिणी वराकी
तस्या विलोक्य तनयान्हृदि जाततोदः
संताडयामि तदिमामधुनानपत्याम् ॥ २८२ ॥

इति। अये न केवलमस्या एव दोषादनुदयः पुत्राणां किं तु तवात्र दोषो-ऽपि कारणं भवति । तत्किमेनामभिताडयसि । किं ब्रवीषि ।

नो पर्वाणि न संक्रमो दिनमणेर्नैवोपरागद्वयं
नो सन्ध्ये न दिनं न वा मृततिथिः पित्रोर्मया लक्षिता
अस्नाताधिगतार्तवैव बहुधा सेयं मयासादिता
गर्भो नैष धृतोऽनया पिशुनया को नाम दोषो मम ॥ २८३ ॥

इति । मन्दास्मितम् सस्मितं किं ब्रवीषि । अयि ब्राह्मण भवन्तमृचित-काले भार्यागामिनं को नाम कथयेत्सदोषमिति । ब्राह्मणि किं ब्रवीषि । अये अहमपि किं करोमि

गो गः पंपदमुद्वहन्मम दृशोः पन्थानमभ्यागत-

स्तत्रैकोऽपि मया न भुक्त इति न प्रायो विना बालकान् ।
तत्यागे किल योग्यताविरहिता हेतुर्न चानादरः
किं वक्ष्यामि तथापि नाजनि सुतो दोषोऽपि मे कीदृशः॥२८४॥

मदनमङ्गल किं ब्रवीषि । अहो साहसमस्या ब्राह्मण्या या पुनः पतिसमक्षमीदृशमात्मनः कुपूयं चरित्रमुद्घाटयन्ती न बिभेतीति । ब्राह्मणि किं ब्रवीषि । अये के नाम तद्धितमाचरन्तस्तस्माज्जगति बिभ्यतीति । अयि ब्राह्मणि कीदृशं हितं पत्युस्ते स्वैराचारेण । किं ब्रवीषि ! महानुभाव किं त्वं न जानासि पतिमेनं पितृघोरर्णादुद्धर्तुकामया मया पुनरकारि क्रियते करिष्यते चैवं विवन्धः पुत्रोत्पादने व्यवसायः । तस्मादस्मात्कुतो बिभेमिति । अयि ब्राह्मणि आस्तामिदं नरकपाताद्वा कथं न बिभेषि । किं ब्रवीषि । तदपि भयं श्रीमद्यज्ञवराहसुबोधाचार्यनाम्नः पौराणिकप्रवरस्य वचसा सुदूरमुत्सारितमेवेति । अयि कथय कथय कथमुपदिष्टस्तेन धर्मः । किं ब्रवीषि । शृणु कथयामि ।

तप्तकालायसस्तम्भे तीक्ष्णकण्टकदन्तुरे ।
बध्नन्त्या कण्टकोद्भेदं योषितं परगामिनीम् ॥ २८५॥

इत्येकदा पौराणिकगाथां निशम्य निर्वेलभयोद्विग्नहृदयाहं न्यवसम् । अथ सोऽयं पुराणतत्वपारदृश्वनामाचार्यः निशि लब्धावकाशो यथापूर्वं मामुपेत्य परिरब्धुमारभमाणो मया प्रतिषिद्धपरिरम्भः सखेदं परिरम्भनिषेधकारणमन्वयुङ्क्त । अथाहं पुरतस्तस्य गाथां यथाश्रुतमुपन्यस्य तेनाहं बिभेमि परपुरुषाभिगमनादित्यवोचम्।इदमाकर्ण्य क्षणं विहस्य सोऽयं मामवादीत्। किमेतावदेव भयनिदाम्। सरलहृदये तन्हि सर्वथैव वञ्चितासि केन वा पुराणतत्वलेशानभिज्ञेन पौराणिकहतकेन । अतोऽजनि मनसि तवेयमत्याहिताशङ्का । अस्य तत्वं त्वन्यदेव । शृणु कथयामि ।

कल्पादौ कल्पितस्तम्भ इदानीं लुप्तकण्टकः ।
तत्र बद्धास्तु विन्दति तूलशय्यासुखं स्त्रियः ॥ २८६ ॥

इति तेनोपपत्तिमता वचनेन निरातङ्कास्मि संवृत्तेति । सशिरःकम्पम् । तन्युपपद्यते ते स्वैराचारिता । भवतु सुखमास्व त्वं वयं गच्छामः । कतिचित्पदानि गत्वा पुरोऽवलोक्य । सखे केयं सोद्वेगमनुक्षणपरिस्खलच्चरणा तरुणी समापतति । भवत्वेनामालापयामि । अवले का त्वम्। कुत इ-

दानीम् । क्व प्रस्थिता । सोद्वेगं दीर्घमुष्णं च निश्वस्य किं ब्रवीषि । महानुभाव किं कथयामि । धर्मोज्जीवनस्य मम स्वामिनो मध्यमपुत्रस्य विलासबन्धोरद्वितीयलावण्यसीमा द्वितीया कलहंसलीला नाम कुलदैवतयात्रार्थमास्तनंधयस्थविरं प्रस्थितेषु स्वजनेषु दुर्वारशिरोवेदनया दूयमाना तैर्गृह एव विसृष्टा। वनविहारविनोदेन तामेव वेदनामपनेतुकामा गृहारामे प्रविश्य तत्र दलितललितकमलकलितविमलकमलकमलाकरविहारतुषारपारीरगिरिसमीरकिशोरसंपर्कनवीकृतप्राक्तनवेदना तत्र क्षणमात्रमपि धृतिमवष्टम्भयितुमकुशला ततः परावृत्य पुनरपि केलिगृहपर्यङ्काङ्कोपहिततनुरविरतकृतपरिवर्तना तत्क्षणमेव पश्यन्तीनामस्माकमदृश्या बभूव । तदिदमत्याहितं तद्बन्धुभ्यो निवेदयितुं गच्छामीति । दीर्घमुष्णं च निश्वस्याश्रूणि विमृज्य । हा हन्त हतोऽस्मि भग्नभागधेयः । न प्रभवामि श्रोतुमपि सुस्थितां तां प्रियतमाम् । क्षणमात्रं विचिन्त्य । भो भोः प्रियमित्रे कथमेतत्कथयतम् ।

अकाण्डेऽदृश्याभूत्सुतनुरिति मिथ्यैव कलये
विमृश्य ।
कुतो नाम ब्रूयादियमपि मुधात्याहितमिदम् ।

अथ वा

हृता स्यात्किं भूतैः ———————
पुनः सविमर्शं सविषादं च ।
———अलमिह वितर्केण बहुना
विलीना हेमाङ्गी स्मरदहनसंतापिततनुः ॥ २८७ ॥

आकाशे लक्ष्यं बध्वा सबाष्पगद्गदम् । प्रिये कलहंसलीले

लुण्टाकेन हृते हृषीकनिवहे कामेन यत्नान्मया
चित्तं न्यस्तमपि त्वयि प्रियतमेत्यत्यन्तविस्रम्भतः ।
कृत्वा न प्रतिदानमस्य भवती कुत्राप्यभूत्प्रस्थिता
विश्वासः क्व नु योषितः क्व नु पुनर्धिङ्मादृशं बालिशम्॥२८८॥

पुनर्विमृश्य । सुन्दरी मन्मनोमूल एवायमत्याहितापातः । तदेतदाकर्ण्यताम् ।

कृत्वा मे हृदयं शरण्यमबले क्षिप्ताः स्मरेणेषव-
स्त्वां लोलमुपेत्य शश्वदपि नं चक्रेऽपराद्धाम्बकम् ।

क्रुद्धस्तेन नितान्ततीव्रविशिखैश्छिच्छेद स त्वां न चे-
दुच्छेत्तुं प्रभवेत्कथं नु भवतीं स्वप्रेयसीभ्रान्तिदाम् ॥ २८९॥

सबाष्पम् । हा हन्त किमतः करोमि प्रियतमे ।

चक्षुःप्रीत्या तव मनसि मे रोपिता हर्षवल्ली
वार्ता वृष्टेः किमपि समयं म्लापिता नोपलब्धा ।
सख्यास्ताद्दग्वचनसुधया भूय उत्पल्लवाभू-
त्सेयं कृत्ता शिव शिव तवाश्लीलवार्तालवित्रैः ॥ २९० ॥

साञ्जलिबन्धमाकाशे लक्ष्यं बध्वा ।

मदन मलयवायो माधवाङ्के किमर्थं
मम कलयथ तापं किं मया वोऽपराद्धम् ।

क्षणं विचिन्त्य दीर्घमुष्णं च निश्वस्य ।

विधिहतदयिताशावर्म दृष्ट्वा मदङ्गं
बत बत धृतवैराः किं न कुर्युर्भवन्तः ॥ २९१ ॥

सदैन्यमनङ्गं प्रति ।

शीतांशुः खलु राहुवक्त्रगलितोद्गीर्णः स मन्दानिलः
पाटीराद्रिभुजङ्गवक्त्रकुहरीखेलारतः सन्ततम् ।
युक्तस्तस्य च तस्य मादृशवधः कामोऽसि लोकप्रिय-
स्त्वं हंसि स्मर हन्त किं नु कथयाभ्यन्यो विधेः प्रक्रमः२९२

पुनर्दीर्घमुष्णं च निश्वस्य सबाष्पगद्गदम् ।

त्वदाशया परिष्ठधानमून्वपूषि वल्लभे ।
शक्नोमि नो धारयितुं त्यजामि स्वस्त्यतोऽस्तु मे ॥ २९३ ॥

पुनर्विचिन्त्य । इदमपि दुर्लभं मे मन्दभाग्यस्य । यतः पूर्वमेव मया ते विप्रलम्भवेदनासहनया प्राणप्रहाणे व्यवस्यता

माकन्दस्तवकस्रवन्मधुरसः पीतः प्रसूनास्तरे
न्यस्तं किं च कलेवरं मलयभूवायुः समालिङ्गितः ।
दृष्टा पद्मवनी चिरं परभृतालापः समकर्णितो
धिक्केनापि गतं न जीवितमिदं त्यक्ष्यामि हा हा कथम् २९४

मन्दारशेखर किं ब्रवीषि । उपसंहर सखे शोकावेगं कमनज्योत्स्नायाः समागमपर्यन्तम् । तस्या मुखेन सम्यगिदमाकलय्य ततः समाहितमाच-

रिष्याम इति । सदैन्यनिश्वासम् । सखे मन्दारशेखर कृतं ते प्रत्याशावर्तपरिवर्तनेन ।

का नाम कमनज्योत्स्ना कुतस्तस्या इहागमः ।
कृत्तमूले तरौ हन्त फलोदयमपेक्षते ॥ २९९ ॥

वामतोऽवलोक्य । केयमतित्वरितगतिः समापतति सीमन्तिनी । यावदेनामालपयामि । अयि सीमन्तिनि कुतस्त्वं समागता । किं ब्रवीषि। महानुभाव महाकूटतः पुण्यक्षेत्रादिति । अयि सम्प्रति संप्रवर्तमाने भगवत्याः कात्यायन्याः पुष्परथमोहत्सवे त्वमितः समागतासीत्याश्चर्यम्। किं ब्रवीषि । महानुभाव परतन्त्रः सर्वथैव दासीजनः । अतः प्रत्यासन्नमपि देव्याः पुष्परथमहोत्सवमुत्सृज्य स्वस्वामिनिर्देशात्तद्गृहानितो गच्छामीति। कस्ते स्वामी येनेदानीं त्वमेवमादिष्टा। किं ब्रवीषि स खलु विश्रुतो धर्मोज्जीवन इति । आत्मगतम् । नूनमस्या मुखेन व्यक्तीभविष्यति प्रियायाः कृत्स्न एव वृन्तान्तः । प्रकाशम् । स किमर्थं त्वामितः प्रेषितवान् । किं ब्रवीषि । श्रूयतां सा खलु कुलदेवता स्वामिनो मे भगवती धर्मोज्जिवनस्य। तद्यात्रायां तत्कुलजनैर्निःशेषतया गन्तव्यमिति तद्गृहेष्वाचारः। इदानीं तु स्वामिना मे यात्रार्थं प्रस्थितेन भूयिष्टाशिरोवेदनया दूयमाना निजवधूः कलहंसलीला गृह एव विसृष्टेति। सहर्षशोकमात्मगतम् । अये किमियं कथयिष्यति प्रियागतं प्रियमप्रियं वेति सुखदुःखयोरन्तरालमवलम्बते मानसम् । भवतु प्रच्छामि । प्रकाशम् । अयि ततः परं किं संवृत्तम् । तदनु तत्र गत्वा कुलदेवतां तां विविधपूजोपहारैः सन्तर्प्य प्रणतोपाविष्टेषु सकलजनेष्वकाण्ड एवाधिष्ठानादेव्या वागेवं निःससार । अरे रे धर्मोज्जीवन

यदार्यकृतमर्यादा भवता जाल्म लङ्घिता ।
तदद्य ते स्नुषा गेहान्नीता सा योगिनीगणैः ॥ २९६ ॥
अन्योऽप्यनर्थं भविता भवत्सु गृहगामिषु ।
यदीच्छसि पुनर्भद्रमेवं मासत्रयं कुरु ॥ २९७ ॥
अत्रागत्य महाक्षेत्रे मम पूजापरायणैः ।
स्थेयं भवद्भिराखिलैर्दासोदासजनावधि ॥ २९८ ॥
पूजा जपो बलिर्होमस्तर्पणं विप्रभोजनम् ।

कर्तव्यमन्वहं सर्वैर्भवद्भिर्नक्तभोजिभिः ॥ २९९ ॥
तत्सख्या प्राणसमया दीपा देया गृहे निशि ।
हंसतूलमयी शय्या क्षीराभप्रच्छदाम्बरा ॥ ३०० ॥
अनुलेपनताम्बूलमाल्यानि विविधानि च ।
तृप्यन्तु डाकिनीमुख्या योगिन्य इति भक्तितः ॥ ३०१ ॥
आ प्रारम्भादा विरामं कर्तव्यमिदमेकया ।
प्रमादः स्यादन्यथा चेदित्युक्त्वा विरराम सा ॥ ३०२ ॥

अथ तेन मम स्वामिना तदाकर्णनसमय एव समुद्विग्नान्तरात्मना श्रोत्रियेभ्यो धेनुसहस्रविश्राणनं प्रतिश्रुत्य लुलायचालिना पिशितासवाभ्यां च संतर्प्य पुनरपि वधूलाभाय संप्रार्थिता सा भगवती भवानीति। अथ सा किमाह देवी। किं ब्रवीषि । न किमपीति। मन्दारशेखर किं ब्रवीषि। अथ स्वामिना ते किं व्यवसितमिति। अबले किं ब्रवीषि । ततश्च स्वामिना मे न खलु विफलीकृतभक्तानुसरणपरिश्रमाणि दैवतानीति निश्चित्य तद्दूरितमशेषमूररीकृत्य स वत्सायाः कलहंसलीलायाः प्राणातिरिक्तां सखीं कमनज्योत्स्नां तादृशविधेयेषु नियोज्य गृहजनमशेषमिहानयेति प्रहितास्मीति। सनिश्वासम् । सपदि मयि मन्दभाग्ये विमुखी जाता सापि भगवती भवानी । नैव यया प्रसादीकृतः प्रार्थितयापि मम प्रियायाः पुनरागमः। सबाष्पगद्गदम्। प्रिये कलहंसलीले त्वयेदानीं देव्यापि परिवञ्चितः किं करोत्वशरणो विधिहतकहतः कन्दर्पविलासः । शृणु भवत्याः

चक्षुःप्रीत्या प्रणयगरिमव्यञ्जकैस्तैर्विलासैः
सख्या वाक्यैर्वितनु मृषा दर्शितस्वानुकूल्यः ।
यादृक्तोपं मयि रचितवांस्तं जहाराशु सर्वं
नीत्वेदानीं परिणतिमिमां गूढवैरी विधाता ॥ ३०३ ॥

अथ वा विधातुरलमुपालम्भेन समुपेक्षितस्त्वयैव प्रणयिन्या दुःसहवेदमोऽस्मि संवृत्तः । कथय तावद्भवतीमेव पृच्छामि ।

उपेक्षा नो चेत्ते मुखनयनदन्तच्छदसखाः
कुतो मे बाधेरञ्शशिकमलमाकन्दनिवहाः ।
सविमर्शम् ।
धिगेतं दुस्तर्कं स्मितकरपदद्वन्द्वविजिता
इमं ते बाधन्ते प्रणयरसपात्रं तव जनम् ॥ ३०४ ॥

सखाष्णोपालम्भम्। अयि कठिनहृदये मिथ्याप्रणयिनि कलहंसलीले

तदात्वे साकूतैः प्रणयमधुरैर्मोग्ध्य (?) विधुरै-
र्न संप्राप्तस्तादृङ्डिथतमनुभावैरपि तव।
त्वया ज्ञातप्रेम्णा प्रमद इह यादृङ्मयि कृतः
समं प्राणैः सोऽयं शिव शिव हृतः संप्रति कथम् ॥ ३०५॥

मन्दारशेखर किं ब्रवीषि। सखे अलमत्यन्तकातरतया सर्वथा भद्रं विधास्य-ति भगवती नो न सन्देह इति। सदैन्यम्। सखे किमहमीक्षितुमपि प्रभ-वामि तमेनमनेहसं यत्र भवेन्मे श्रुतिपथातिथिः प्रियायाः पुनरागमः। पुरोऽवलोक्य। कथमियं त्वरितगतिरितः समापतति पुनश्च कमनज्योत्स्ना यावदेनामुपसर्पामि। उपसृत्य। सखि कमनज्योत्स्ने

रक्ता त्वयि प्रियतमेति यया पुरा सा
कर्णेऽर्पितानि मम वर्णमयामृतानि।
सेयं त्वमञ्जमुखि मे विधिदुर्विपाका-
त्किं श्रावयस्यहह संप्रति नैव जाने ॥ ३०६ ॥

तथापि कथय का वार्ता प्रवर्तते प्रियायाः कलहंसलीलायाः। सशिरःक-म्पं किं ब्रवीषि। त्वया श्रुतचरान्नातिरिच्यत इति। सत्रासगद्गदम्। अरे रे भग्नभागधेय निःसंशयमिदानीं त्याजितमसि प्रियया: प्रत्याशाम्।

दौर्लभ्यं गमिता परं प्रियतमा चेटीमुखेन स्फुटं
प्रत्याशा न निवर्तिता मम पुनस्तस्यास्तु तादृस्थ्यतः।
सेऽयं प्रत्यथिता निवर्तितवती तामद्य चेद्दृशा
हा हा जीवित वज्रकर्कश निरालम्बं कथं स्थास्यसि ॥ ३०७॥

कमनज्योत्स्ने साश्चर्यमिव किं ब्रवीषि। किमिदं नाहं प्रत्येमि प्रहर्षाव-सरे परिदेवनकारणं कन्दर्पविलासस्येति। सहर्षशोकमात्मगतम्।

अश्वासनाय मम वक्ति किमेवमेषा
नो चेन्मृषा किमु जगाद तथा भुजिष्या।
आप्तोदितेष्वपि निदर्शनमन्तरेण
न प्रत्ययोऽस्ति मनसो मदनातुराणाम् ॥ ३०८ ॥

भवतु पृच्छामि। प्रकाशम्। अयि कमनज्योत्स्ने किं तर्हि योगिनीभि-र्नीतपूर्वा पुनरागता कुशलमास्ते मे प्रियतमा। किं ब्रवीषि। केन त्वं प्रता-रितोऽसि योगिनीभिर्नीता कलहंसलीलेति मृषाल्पितेनेति। अहं मन्ये

महाकूटवृत्तान्तमावेदयितुं त्वदन्तिकं प्रहितया धर्मोज्जीवनभुजिष्यया त्वमत्र पुनर्विञ्चितासीति । अथवा त्वया सा न दृष्टेत्यपि संभाव्यते । किं ब्रवीषि । किं तस्या नामधेयमिति । अयेतदा सत्यमेव विस्मृतोऽस्माभिस्तस्या नामानुयोगः । किं ब्रवीषि । कथय पुनर्यदि जानासि मां प्रति कीदृशस्तस्याः स्वामिसन्देश इति । आदरमुपसृत्य कर्णे । एवमेवम् । विमृश्य किं ब्रवीषि । अहो महानुभावा खलु भगवती भद्रजटा या पुनर्युवयोर्दुर्निवारतरमदनवेदनां निध्याय दयमानमानसा दयितां ते कलहंसलीलां निजविद्यानुभावतिरोहितशरीरां विधाय स्वयमपि तिरोहिता विनिर्वर्तितकार्यशेषा त्वरितं समागमिष्यामीति महाकूटं प्रति प्रस्थिता । तयैव प्रकाशितमिदं युवयोर्निरन्तरघटनोपपत्तिसंविधानवैदग्ध्यं न संदेह इति । अयि कुशला सा तिरोधानविद्यायामपि । किं ब्रवीषि । अयि कुतोऽत्र सन्देहः ।

दृष्ट्या विधेयविधुरीकृतशक्तिसैन्या-
न्योधान्विधाय दनुजानधिमण्डयुद्धम् ।
साहाय्यकर्म विदधे त्रिपुराम्बिकायाः
साक्षात्कृता खलु तिरस्करिणी तया सा ॥ ३०९ ॥

तत्प्रसादात्करस्थैव तस्याः स्वपरतिरोधानविद्येति । अयि प्रस्थितायां भद्रजटायां त्वमपि तादृशीं प्रियसखीमेकाकिनीं विहाय किमर्थमत्रागतासि । किं ब्रवीषि । चिरप्रस्थिताया भद्रजटायाः प्रवर्तरूपालम्भाय महाकूटपथेन गच्छन्त्यहं भवन्तमेतद्वृत्तान्तमावेदयितुमिहागतास्मि । इदानीमितःप्रतिनिवृत्य तां चेटीमन्विष्य तत्रत्यवृत्तान्तमशेषतयैव तन्मुखेन विज्ञाय समागमिष्यामीति । सोत्सुक्य । अयि कदा भवत्ते पुनरागमः । किं ब्रवीषि । नियतमेव भवन्तं प्रियान्तिकं नेतुमनुदिततारे सायमागमिष्यामीति । सहर्षस्मितम् । गच्छ गच्छ भवतु निरन्तराया ते प्रवृत्तिः । मन्दारशेखरमदनमल्ली पर्यायतो विलोक्य ।

रक्ता सा दयिता व्यवस्यति परं मद्वाञ्छितावाप्तये
सेयं भद्रजटा स्वतोऽत्र कमनज्योत्स्ना निबद्धादारा ।
जानप्रायमतः प्रियाभिगमनं जानामि निःसंशयं
कस्मादद्य चलाचलं मम मनः संदेहमालम्बते ॥ ३१० ॥

सर्वमिदं देव्या विलसितमाहोस्विद्भद्रजटाया वेत्यपि न निश्चीयते । मन्दारशेखर किं ब्रवीषि । सखे न खलु नियोहा कदापि कमनज्योत्स्ना ।

किं तु तवैव प्रेमगरिमा परमत्याहितमाशङ्कत इति । दक्षिणाक्षिभुजस्पन्दमभिसूचयन् । सखे मन्दारशेखर

मजत्येष स्पन्दं नयनसहितो दक्षिणभुजः
शुभोदर्कं शंसन्मयि मुदमुदारां च कलयन् ।

तथापि

प्रियालाभात्मायं परिणमति किं वान्यविषये-
त्यतो दोलारोहं कलयति नितान्तं मम मनः ॥ ३११ ॥

किं ब्रवीषि । सखे प्रियालाभात्मनैव परिणमति शुभोदर्कस्ते न संदेह इति । सहर्षौत्सुक्यम् । सखे कथय कथमिदं भवतावगतम् । किं ब्रवीषि । अयि श्रूयताम्

तामन्तरेण दयितां त्रिदिवोऽपि नूनं
द्वेषास्पदं तव सुधापि यथा विषाक्ता ।
ईदृङ्निमित्तपरिसूचितभाग्यलाभ-
स्तस्मान्मया खलु तदागम इत्यबोधि ॥ ३१२ ॥

इति । मदनमङ्गल किं ब्रवीषि । सखे सत्यमिदं यदाह मन्दारशेखर इति । सस्मितं शिरस्यञ्जलिं घटयन् । अवितथं कुर्वन्तु वाचो वां मे सर्वेष्टदेवताः । एतमितः सरस्तीरमाधवीमण्डपे कमनज्योत्स्नायाः पदवीं प्रतिपालयामः । मन्दारशेखर किं ब्रवीषि । कतमेन पथा गन्तव्यमिति । मदनमङ्गल किं ब्रवीषि । नन्वनेनैव नेदीयसा कुसुमापणपथेनेति । भवतु तथैव करिष्यामः । कतिपयपदानि गत्वा नाट्येन कुसुमापणं प्रविश्य पार्श्वतोऽवलोक्य सहर्षम् । अत्र खलु कुसुमलाविकाः

सिञ्चन्त्यद्भिः कुसुमनिकरं वामहस्ते ससूत्रे
धृत्वा पुष्पं ददति च रणत्कङ्कणं ग्रन्थिमाशु ।
शश्वद्दृष्टिं विपणमभितः प्रेरयन्ति प्रकामं
मध्ये मध्ये वलितवदनं कुर्वते चाङ्गभङ्गम् ॥ ३१३ ॥

अहो कुसुमविक्रयरामणीयकमासां मालाकारवधूटीनाम् । एताः खलु

यूनः केतृजनान्महासललितं पश्यन्ति तानापणा-
दन्यस्माद्विनिवर्त्य गूढनयनस्पन्दैर्नयन्त्यन्तिकम् ।
उन्नतकक्षरुचो निवृत्तसिचयव्यक्तैकवक्षोरुहाः
प्रोत्तीय प्रतिदर्शयन्ति सुमनोहारान्प्रशंसन्ति च ॥ ३१४ ॥

किं च

नीवीदेशनिवेशितामिव सखे द्रष्टुं पुनर्वीटिका-
मुत्सार्यानतकन्धराः करयुगेनात्रस्ति कल्यंशुकम् ।
उन्मीलद्वलिनाभिलोमललितं संदर्शयन्त्यङ्ककं
यूनां तेन हरन्ति हन्त नितरां वित्तं च चित्तं दृशम्॥३१५॥

अपि च

प्राप्ते क्रेतरि मुग्धमन्दहमितं पृच्छन्ति तद्वाञ्छितं
तन्मूल्यं परिपृच्छति प्रतिवदन्तीष्टं प्रयच्छेति ते ।
भूयः क्रयविचारकारिणि पुनः सोत्प्रासमाचक्षते
क्रेतारस्त इहान्य एव पुरुषास्त्वं गच्छ गच्छेति च ॥ ३१६ ॥

इतश्च क्रेतारः

दोर्मूलं च विविक्तकान्ति कुसुमप्रोदञ्चनोन्मीलितं
भूयस्तत्पटकूत्रवेष्टनविधौ वल्गन्तमुच्चैः कुचम् ।
लोलत्तारकमीक्षणं प्रियवचः स्मेरं मुखाम्भोरुहं
पश्यन्तः प्रतिरक्तिशून्यहृदयास्तिष्ठन्ति तासां पुरः ॥३१७॥

मदनमङ्गल किं ब्रवीषि । वयमप्यामां सल्लापशर्मणः क्षणमात्रं पात्रीभवाम इति । मन्दारशेखर किं ब्रवीषि । अतिपतति सखे सख्युः कन्दर्पविलासस्य सङ्केतसमयः । दुष्करं चासां नर्मालापवागुरावलयलग्नानामस्माकमितोऽपि निर्गमनम् । अतोऽद्य झटिति माधवीमण्डपमेवानुसराम इति । सखे सत्यमिदं तथैव करिष्यामः । इति ससंभ्रमं कुसुमनिषद्यामतिक्रम्य नाटयेन माधवीमण्डपं प्रविश्य पश्चादूर्ध्वमवलोक्य । अयि मालिकेन्दुकलालिकाललितविभ्रमभ्रमितचेतोभिरस्माभिर्दिनापगमो न लक्षितः । तथा हीतश्च भगवान्

पाश्चात्याम्बुधिदृष्टपूर्ववडवासंदर्शनोत्कण्ठया
धावद्रथ्यतुरंगनिष्ठुरखुरक्षुण्णेऽस्तशैलस्थले ।
तस्मादुच्चलितेन धातुरजसा लिप्तानुरक्ताङ्गको
मन्दांशुः प्रियदर्शनः खलु सहस्रांशुर्दरीदृश्यते ॥ ३१८ ॥

इयं च

पूर्वा क्षणक्रमनिरस्तसमस्तरागं
हित्वा निजान्तिकमुपेत्य रवौ मरागे ।

आलोकतः पुनरमुष्य धृतप्रसादा
जाताचिरेण चरमा परमानुरक्ता ॥ ३१९ ॥

इतश्च

अपरागमरक्त आत्मकान्ते
गरलं ध्वान्तमयं पपे नलिन्या ।
विजहौ न तथापि जिवितं सा
विपजानां न विपाद्भवन्त्यपायाः ॥ ३२० ॥

मन्दारशेखर किं ब्रवीषि । अयि प्रभूतबलशालिनस्तेजस्विनोऽप्येकाकिनः पुनरशक्यदमना एव लघीयांसोऽपि बहवश्चेत्परिपन्थिनः । तथा हि

तद्रोदोऽन्तरसन्ततान्धतमसं निर्भिद्य तिग्मांशुभिः
संछेत्तुं बलिसद्मगं कृतमतिर्भानुर्जगाहेऽम्बुधिम् ।
अन्यत्संप्रति संनिपत्य वृणुते लोके तमोमण्डलं
किं चैतस्य नयत्यहो परिभवं पयोजिनीं वल्लभाम् ॥ ३२१॥

इति । मदनमङ्गल ऊर्ध्वमभितोऽवलोक्य किं ब्रवीषि ।

उद्धर्तुं किल शैलकेलिरभसस्तानि पाथोनिधे-
रन्तर्भूषणमौक्तिकानि दिविजस्त्रीभिः समुत्कण्ठया ।
गाढं तत्र निमज्जितेन रविणा बध्वा दृढं रश्मिभिः
प्रोत्क्षिप्तानि निपत्य तानि गगने तारापदेशं दधुः ॥ ३२२॥

इति । स्मरणमभिनीय सविषादम् । अनुदिततारे सायमागमिष्यामीत्युक्तवती सा सत्यवादिनी नाद्यापि समागता । अतः सत्यमत्याहितेन भवितव्यं प्रियायाः कलहंसलीलायाः । अन्यथा किमेवं चिरायति कमनज्योत्स्ना । मन्दारशेखर किं ब्रवीषि । विरम विरम सखे निरन्तरमेवममङ्गलमेव किमुत्प्रेक्षसे । चिरयति सा तत्रैव कार्यगौरवात् । न संदेह इति । भवतु तर्हि तस्याः पन्थानमेवाधितिष्ठन्तस्तदागमं प्रतिपालयामः । कतिपयपदानि गत्वा पराङ्गसङ्गमभिनीय । अये कोऽयमङ्गनाजन इवाभिपतति ममाङ्गे । भवतु पृच्छाम्येवम् । अये किमेवमुपरि परिपतसि । का त्वं पूतना किमाहोस्विद्यक्षिणी । मन्दारशेखरं प्रति । सखे किमियमुच्चैर्भर्त्सितापि न वक्ति किञ्चिदपि । किं ब्रवीषि । सखे कुतोऽत्र प्रभवः पूतनादीनां किंतु सुघटितभवत्कार्या समागता स्यात्कमनज्योत्स्ना । अन्यथा भवन्तं सा कथमेवं परिहसेदन्या वा यदृच्छामिलितेति । नहीमां पृच्छामि । अलमयि कमनज्यो-

त्स्ने तदामुना मे नितान्तपरिहासेन। प्रयच्छ पृच्छतो मे प्रतिवचनम्। सोपालम्भं किं ब्रवीषि । अयि सरसहृदय भवन्तमेतावतैव मादृशं जनमलक्षीकुर्वन्तं किं पद्मवतारयिष्यति वा न जानेऽहं प्रियोपगूहनप्रमोद इति । सहर्षमात्मगतम् । इयमिदानीं किमपि भावुकमभिसूचयन्ती हृदि मदीये कमपि प्रमोदमङ्कुरयति । प्रकाशम् । अयि सखि दुरपन्हवतिमिरनिवारितदृक्प्रसरः सत्यमहं त्वां नावेदिषम्। किं ब्रवीषि। अये कुतोऽद्यापि तमःस्थितिसंभावना । किं न पश्यति भवान्

दर्पोद्रेकः कुसुमधनुषो जीवितं कैरवाणां
जीवंजीवप्रणयगरिमा भाग्यराशिर्निशायाः ।
शृङ्गारश्रीललितहसितं पानपात्रं सुराणां
पौरस्त्याद्रेर्जयति शिखरं किं तमः स्थातुमीष्टे ॥ ३२३॥

मन्दारशेखर प्राचीमालोक्य किं ब्रवीषि। कथमुदितो भगवानेतावतैव शीतांशुरिति । मदनमङ्गल किं ब्रवीषि। इतः संप्रति पूर्वाचले

पद्मिन्या दयितेऽनुधावति रुषा स्वं पद्मिनीद्रोहिणं
भ्रान्त्वा भीतमना दिगन्तमखिलं चन्द्रो जगाहेऽम्बुधिम् ।
गाढे तत्र च तत्र विह्वलममुं कर्षन्ति ताराः पतिं
सोयं तच्छ्रमवारिकुङ्कुमरसैः सिक्तोऽरुणो दृश्यते ॥ ३२४॥

ततश्च

रङ्कावङ्कगते त्रिविष्टपवनीखेलत्कुरङ्गीगणैः
साकं क्रीडनकौतुकेन रभसादुत्प्लुत्य याते दिवम् ।
तच्छायानुगतात्ममूर्तिरधुना धर्तुं तमेनं शशी
मन्दं व्यायतरश्मिजालकलितः खाग्रं समारोहति ॥ ३२५ ॥

इति । मन्दारशेखर किं ब्रवीषि ।

भानावभ्युदिते तथा मयि गते किं स्यान्मम प्रेयसी
हा हेत्यस्तमितः शशी रसवशादिन्दीवरिण्याः स्मरन् ।
सोऽयं संप्रति नीलिमाङ्कितनुस्तस्माद्दरीदृश्यते
ये वै यत्किल संस्मरन्ति चरमं तद्रूपमेष्यन्ति ते ॥ ३२६ ॥

इति । कमनज्योत्स्ने किं ब्रवीषि । ममैवं प्रतिभाति

आदायामृतपूर्णमर्कचषकं शोणारविन्दप्रभं
पाणाविन्द्रवधूर्विलोक्य च पुनस्तस्मिन्नभःश्यामिकाम् ।

चिक्षेपोपरि कोपतः परिजनेऽसंशोध्य दत्तान्मुखे-
त्येनं तं शशिनं प्रशंसति जनस्तत्पाणिमुक्तार्जुनम् ॥ ३२५॥

इति । चन्द्रमसमालोक्य सासूयामर्षम् ।

कमलविजयं नेत्रानन्दं स्मरस्य सहायतां
त्वमिव तनुते पीयूषांशो प्रियावदनं मम ।
त्वदुदयफलं तस्मादन्यन्न किंचिदवैम्यहं
कृपणहननप्राप्ताद्दोषाकरत्वपदादितः ॥ ३२६ ॥

सावधीरणम् । अयि दोषाकर सपदि प्रिया मे न संनिधत्त इत्येव तवायमवलेपः । नचेदेवं

तस्या मुखे जयति तादृशकान्तिकान्ते
त्वां चन्द्र चन्द्र इति के कलयन्तु लोके ।
किं ज्योतिरिङ्गणगणं गणयन्ति लोका-
स्तत्वेन चण्डकिरणे त्वयि वा परोगे ॥ ३२७ ॥

मन्दारशेखर सादरं किं ब्रवीषि । आयि कमनज्योत्स्ने किमशेषतो निष्पन्नं मे सुहृत्कार्यमिति । कमनज्योत्स्ने किं ब्रवीषि । कथयिष्यति सर्वमेव भगवती साक्षाद्भद्रजटेयं समागतेति । वामतोऽवलोक्य । अये स्मृतेरपि पूर्वमिहोपगता सा भगवती भद्रजटा । यावदेनामुपसर्पामि । ससंभ्रममुपसृत्य । भगवति प्रणमति भवतीं दुस्तरव्यसनसागनिमग्नः पारमपश्यन्कन्दर्पविलासः । भगवति सानुनयं किं ब्रवीषि । वत्स लघु समुत्तीर्णार्णवश्चिरं रमस्व वाञ्छितपार इति । सहर्षप्रश्रयमञ्जलिं बध्वा । भगवति तथास्तु भवत्याः प्रसादात् । सखायौ किं ब्रूथः । भगवत्यावामपि प्रणवाव इति । भगवति किं ब्रवीषि । वत्सौ स्वाविशेषस्य सख्युः कन्दर्पविलासस्य प्रणामेन किं न गतार्थौ भवतोः प्रणाम इति । सखायौ किं ब्रूथः । भगवति सत्यमिदं सख्युः प्रणाममेव प्रणम आवयोराम्रेडयतीति । मन्दारशेखर किं ब्रवीषि । भगवति किंचिच्छेषं मे चित्रकार्यमिति । किं ब्रवीषि । वत्से कमनज्योत्स्ने किं न ददासि एचडनेऽस्मै प्रतिवचनमिति । कमनज्योत्स्ने किं ब्रवीषि । भगवति भवत्याः प्रतिपालयाम्यनुज्ञामिति । सोद्वेगमात्मगतम् । अये मत्प्रियोदन्तमिमे स्वतो वक्तुं सन्दिहाने किमप्यमङ्गलमभिसूचयतः । हन्ताहं किं करोम्यशरणः । प्रकाशम् । आयि कमनज्योत्स्ने अलमलं ते विलम्बेन कथय कथय यदत्र प्रसक्तं मद्वैवदुर्विपाकात । नम्मिनं किं ब्रवीषि । आयि कन्दर्पविलास अलं ते वैक्लव-

व्येन। स्थिरो भव सर्वं ते वक्ष्यामीति। मन्दारशेखर किं ब्रवीषि। अयि कमनज्योत्स्ने आतुराणामरुंतुदः खलु विविक्षितकथनविलम्बः। अतः कथय सत्वरामिति । कमनज्योत्स्ने अङ्गुल्या मां निर्दिश्य किं ब्रवीषि। अयि मन्दारशेखर किं कथनीयमेतस्यं कलहंसलीलापर्यङ्काधिरोहणमेतदङ्काधिरोहणं च कलहंसलीलाया द्वयमेवावशिष्यत इति । सहर्षम् । हृदय त्वया निःसंशयमवतीर्णः संशयार्णवः । सावष्टम्भम् ।

क्रूरास्त्राण्युपसंहर स्मर करानिन्दो तुषारीकुरु
त्वं मन्दीभव मन्दमारुत मधो किं त्वं मुधा चेष्टसे ।
स्वच्छन्दं रटतोच्चकैः शुकपिकाः कालो व्यतीतोऽद्य वः
सेयं पङ्कजलोचना खलु मदीयाङ्कं समारोहति ॥ १३० ॥

क्षणं विचिन्त्य सनिश्वासम् । इदमपि प्रत्याशापारवश्येन केवलमाशासनीयम् । यतः सप्रत्यूहसमागमाः सर्वथैव परकामिन्यः । भगवति किं ब्रवीषि। वत्सेदं मासत्रयात्परत एव समाशङ्कनीयम् । ततस्त्वर्वाङ्निःसंशयमेव तस्यां रमस्व स्वकलत्रविशेषमिति । मन्दारशेखर सौत्सुक्यं किं ब्रवीषि । भगवति कथं कृतेयमघटितघटना भवत्येति । भगवति किं ब्रवीषि । श्रृगु वत्स कथयामि दुर्निवारतरमदनशरानलसंतप्यमानतनुलतां वत्सां कलहंसलीलां निजविद्यानुभावतिरोहितशरीरां विधाय स्वयमपि तिरोहिता महाकूटमुपेत्य कात्यायन्य धेष्ठानं संनिहिता तदानीमहमेवमवोचं अरे रे धर्मोज्जीवन यदार्यकृतमर्यादा भवता जाल्म लङ्घितेत्यर्धोक्ते मदनमङ्गल किं ब्रवीषि । भगवति त्वयैव तत्र किमुपन्यस्तेयं सप्तश्लोकी। तर्हि न वितथ एव कमनज्योत्स्नाया अध्याहारः । या पुनः सर्वमिदं भद्रजयाया एव संविधानवैदग्ध्यं न सन्देह इति व्याजहारेति । भगवति किं ब्रवीषि। केनेदमावेदितं युवाभ्यामिति । मदनमङ्गल किं ब्रवीषि। धर्मोज्जीवनस्य गृहजनमशेषं महाकूटं नेतुमागतया तस्यैव भुजिष्ययेति। भगवति सानुस्मरणं किं ब्रवीषि । तर्हि स्वस्वामिना निजगृहान्प्रति प्रहितया मदनच्छुरिकया तत्रत्यवृत्तान्तः सर्वोऽपि निवेदित एव स्यात् । किंमतो वक्तव्यमवशिष्यत इति। मन्दारशेखर किं ब्रवीषि। भगवति निजविद्यानुभावतिरोहिततनुकलहंसलीलाकन्दर्पविलासावसंयोज्यकिमर्थमीदृशपरिश्रमपात्रमात्मानं कृतवती तत्रभवतीति महती मे विचिकित्सेति । भगवति किं ब्रवीषि । वत्स इदं सम्यगाशङ्कितम् । श्रृणु कथयामि ।

तिरोधानं कामरूपं मयेनापि प्रपञ्चितम् ।
रतौ मृतौ च निद्रायां प्रायशो विनिवर्तते ॥ ३३१ ॥

अतो मया सा परिपाटी परित्यक्तेति । मदनमङ्गल किं ब्रवीषि । भगवति किमर्थं कुतोऽयं मामत्रयमित्यल्पकालनियम इति । भगवति किं ब्रवीषि । वत्स न सांप्रतमत्याशा परकलत्रेषु । किं चैवं पराङ्गनासु चिरकालनिर्बन्धोऽवश्यमेव रहस्यभङ्गाय कल्पते । अथ वा यथायोगं तद्रूपागमोपायमनन्तरमनुचिन्तयिष्याम इति । सहर्षोत्सुक्यम् । भगवति किं सर्वेऽपि भगवत्या तदीया निःशेषतया प्रस्थापिता महाकूटम् । किं ब्रवीषि । वत्स कुतोऽद्यापि संशयः । न केवलं ते प्रस्थापिता किं तु

संरुद्धः सपरिच्छदो गृहपतिः कूटे महापूर्वके
मासानां त्रितयं गृहागमविधावस्यावधिः कल्पितः ।
तस्याः प्राणसखीयमिष्टकलनारम्भे परं योजिता
सेयं ते स्मरपुण्डरीकवदनग्रस्ता प्रिया मोचिता ॥ ३३२ ॥

परमियमेकैवावशिष्यते युवयोः परिरम्भमङ्गलारम्भकलनेति । कमनज्योत्स्ने किं ब्रवीषि । भगवति सापि निष्पन्नप्रायैव भवत्याः प्रसादादिति । सखायौ किं ब्रूथः । कोऽत्र सन्देह इति । सौत्सुक्यम् । भगवतीदानीं कुत्रास्ते मे प्रियतमा । कमनज्योत्स्ने सस्मितं किं ब्रवीषि । अयि किं त्वं न पश्यसि पुरः स्फुरन्तीं तां ते प्रियतमामिति । सविषादवैलक्ष्यम् । कमनज्योत्स्ने किमद्यापि न मां परिहरति ते परिहासः । अथ वा सत्यमेवैतत्

न जाने किं माया कुसुमधनुषस्तत्रभवतः
क्रियाकार्यव्यूहं विरचितवती सा किमथ वा ।
अयं यस्मिन्यस्मिंश्चरति वसति क्रीडति जनः
पदे तस्मिंस्तस्मिन्स्फुरति पुरतः सैव तरुणी ॥ ३३३ ॥

भगवति किं ब्रवीषि । वत्स नासत्यं ब्रवीति कमनज्योत्स्ना । सेयं वत्सा त्वद्दर्शनसमुत्सुका मयात्रैव समानीतेति । मन्दारशेखर किं ब्रवीषि । भगवति मन्ये समुत्कण्ठितयुवमिथुनसंघटनमसमुत्सुका त्वमेवेति । सहर्षोत्सुक्यम् । भगवति यद्येवं तर्हि कुतः मा न दृश्यते । किं ब्रवीषि । पश्य तावदुपसंहरामि तिरस्करिणीमिति । विलोक्य सानन्दम् ।

सेयं सिन्दूरसायनं हृदयभूसंतापनिर्वापणे

दृष्टानीहितवस्तुदूषितदृशोः पीयूषप्रागञ्जनम् ।
मूर्तिः फुल्लशिरीषदामविभवप्रत्यग्रसंवादिनी
जाता संचितपूर्वपुण्यविभवैरत्रैव नेत्रातिथिः ॥ १३४ ॥

मन्दारशेखर साश्चर्यं किं ब्रवीषि ।

अकस्मात्किं जाता धरणितलतः कापि चपला
किमाहोस्विद्भ्रष्टा स्मरकरतलात्खड्गलतिका ।
परिच्छेत्तुं त्वेनां प्रभवतु विधातापि स न चे-
दमुष्याः सांनिध्याद्विसृमरमहामोहगलितः ॥ १३५ ॥

इति । मदनमङ्गल किं ब्रवीषि । स्थाने खलु सखे कथं तां वर्णयामि न खलु मे जिह्वासहस्रमिति यदाह भवानिति। मन्दारशेखर किं ब्रवीषि। अयि तदपि न पर्याप्तमेव जिह्वानामानन्त्यमिति वक्तव्यमिति । अये चित्रमेतत् ।

आलोकात्प्रभृति प्रिये प्रथमतस्तद्विप्रलम्भानल-
ज्वालाजालनिपीयमानमनसा भूयो जनेनामुना ।
विष्वक्तन्वि विलोकिताः समभवंस्तापाय या मूर्तय-
स्तास्त्वेकतमापि मे वितनुते हर्षं तनुस्तावकी ॥ १३६ ॥

करे तां गृहीत्वा स्पर्शसुखमभिनीय सपुलकोद्गमम् ।

किमेषा मोहास्त्रं कुसुमधनुषः पञ्चविशिख-
प्रयुक्ता किं माया मदनरचिता किं नु मदिरा ।
यदस्याः संपर्कप्रमुषितसमस्तेन्द्रियचयो
ममान्तर्दुर्ज्ञेयं किमपि च वितर्कं कलयति ॥ १३७ ॥

सहर्षोत्सुक्यम् । अयि प्रणयिनि

प्रेमक्रीतममुं जनं तव पुरा विज्ञाय भाग्याधिकं
सासूयन्नु विचेष्टितं मधुमुखैर्यत्तत्कथं वर्ण्यते।

किं तेन वा कथितेन

शीतांशोः करकन्दलप्रतिभटैरङ्गैः समालिङ्ग्य मा-
मङ्गानि स्मरमल्लभल्लदहनालीढानि निर्वापय ॥ १३८ ॥

कमनज्योत्स्ने सस्मितं किं ब्रवीषि । सखि त्वमप्येवं कृत्वा तवापि निर्वापय तथाभूतान्यङ्गानीति । कलहंसलीले सलज्जं भगवतीमुपसृत्य किं ब्रवीषि । अम्ब गृहमेहि गच्छाम इति । मन्दारशेखर किं ब्रवीषि ।

अयि कलहंसलीले तृतीयं. जनमन्तरेण युज्यते खलु त्वदुक्त आख्यातवचने बहुत्वम् । तत्कथय जनं कमिहेच्छसि भगवतीद्वितीयं स्वगेहगमने स्वस्याः सहायमिति । कमनज्योत्स्ने किं ब्रवीषि । कमिच्छेदियं प्रेयसः कन्दर्पविलासादन्यमिति। मदनमङ्गल साकूतं किं ब्रवीषि । कमनज्योत्स्ने सपदि भवति वचसा ते मनो मे दत्तावकाशं संशयस्य ।

दृष्टश्चित्तमपाजहार मनसा स्पृष्टः समस्ताः क्रिया
भूयो ध्यानपरंपरापरिचयं नीतोऽनया सुभ्रुवा ।
अस्यापारतिसंज्वराङ्कतनुतालज्जाविरामभ्रमा-
न्दुर्वारान्वत यो दिदेश तममुं सेयं कथं वाञ्छति ॥ ३३९ ॥

कमनज्योत्स्ने किं ब्रवीषि । अत एव खलु संगतार्थोऽयमव्यवस्थितमतयो वृषस्यन्त्य इत्यार्यवाद इति । कलहंसलीले सरोपलज्जं स्वस्थानादपसरन्ती किं ब्रवीषि । कमनज्योत्स्ने अलमलम् । जोषं तिष्ठ । किमत्रैव व्ययीकुरुषे कृत्स्नमप्यात्मनो वैदग्ध्यमिति । कमनज्योत्स्ने किं ब्रवीषि ।

शय्याद्यापि सरोजपत्ररचिता यद्विप्रलम्भानल-
क्लिष्टायास्तव वक्ति तादृशदशां शोच्यां शिलानापि ।

किं चेदानीमिहागमने

पन्था व्याममितः समुत्सुकतया दीर्घातिदीर्घोऽभव-
त्तस्याग्रे वद किं त्वदीयचरणः पश्चाल्लगत्यङ्गने ॥ ३४० ॥

इति । भगवति किं ब्रवीषि।वत्से किं कुर्यादियमपत्रपैव युवतीनां वाञ्छितपरिपन्थिनी । तथा हि

कालः क्षणः प्रहरति प्रहरत्यनङ्गे
स्त्रीणां ध्रुवं प्रियविलोकनलालसानाम् ।
लज्जा हरत्यखिलमेकपदेऽन्तिकस्थे
कान्ते तु संचितमनोरथजातमासाम् ॥ ३४१ ॥

इति । कमनज्योत्स्ने साकूतस्मितं किं ब्रवीषि । सखि कथय कतमा परिभवति भवतीमपत्रपा

पश्चाद्विस्मृतवस्तुदर्शनमिषादूयः प्रियालोकने
निन्दायां मदनस्य नव्यनलिनीपत्रे परावर्तने
स्वावस्थाकथने निजप्रियजनाभिज्ञानसंकीर्तने
या लज्जा समभूत्पुरा त्वयि पुनः सैवेयमन्याथवा ॥३४२॥

इति । कलहंसलीले सभ्रूभङ्गं पदान्तरे स्थित्वा किं ब्रवीषि । अयि कन्दर्पानुलापे किमस्ति तव मनसि न स्थातव्यं मयात्रेति । तर्हि गच्छामि त्वमेवात्र सुखमास्स्वेति । भगवति किं ब्रवीषि । वत्से कलहंसलीले त्वमेवंभूता गच्छसि कथमेकाकिनीति । कमनज्योत्स्ने किं ब्रवीषि । सखि सत्यमेवैतत् ।

पथि तुहिनकरोस्रा जाग्रति प्रोग्ररूपा
न विरमसि किमेका निर्गमे साहसिक्यात् ।
कुसुमशरसहाया त्वं यथेहागतासि
प्रणयिजनसहाया गच्छ गेहं तथैव ॥ १४३ ॥

मन्दारशेखर किं ब्रवीषि । कोऽस्ति त्वदन्योऽस्या जनः प्रणयी नाम । अतस्त्वमेवैनां नय निकाय्यमिति । कमनज्योत्स्ने किं ब्रवीषि । अयि सरसहृदय श्रूयताम् । अनया

किं यात्राप्रतिरोधिनी मम कृते प्राप्ता शिरोवेदना
हृद्योद्यानमुपेत्य किं मम कृते भुक्ता दशा तादृशी ।
किं चन्द्रस्मरमारुता मम कृते निन्दापदं प्रापिताः
केनास्यास्तसदेणशावकदृशः प्रेयाञ्जनोऽयं भवेत् ॥ १४४ ॥

इति । भगवति किं ब्रवीषि । वत्से कमनज्योत्स्ने किमर्थमेनां कदर्थयसि निरन्तरमेवं परिहासोक्त्या । नीयतामिदमप्रमादमतिनिगूढवृत्त्या भवत्या । त्वरितमेव सज्जीक्रियतामखिलभोग्यवस्तुजातमेतस्याः केलीगृहे । महीयसा यत्नेन निवार्यतामतिसूक्ष्मतराण्यपि परोहद्वाराणि । त्वर्यतामविलम्बेन । कुशलासि किं ते वक्तव्यम् । न सांप्रतमस्माकं समवेतानामितो निर्गमनम् । अतोऽहं क्षणार्धविलम्बेन वत्समेनमादाय समागच्छाम्युचितमार्गेणेति । कमनज्योत्स्ने सप्रश्रयं किं ब्रवीषि । आदृतं मया शिरसानुशासनं भगवत्या इति । भगवति मदनमञ्जरीमन्दारशेखरावालोक्य किं ब्रवीषि । वत्सावनुज्ञायतां प्रियमित्रं वां प्रियापर्यङ्कमलंकर्तुमिदानीमिति । सखायौ सहर्षस्मितं किं ब्रूथः ।

स्वैरं रमस्व चिरवाञ्छितयानया त्व-
मस्यां निशि व्रज झटित्यधुना पुनः श्वः ।
प्रत्यग्रहर्षसमुदीर्णविविक्तकान्ति
सत्यं सखे तव मुखं प्रविलोकयावः ॥ १४५ ॥

इति । भगवति सादरं मे चरमाङ्गमभिस्पृशन्ती किं ब्रवीषि । वत्स कन्दर्पविलास किं ते भूयः प्रियमुपकरोमीति । सहर्षप्रश्रयमञ्जलिं बध्वा, अम्ब किमितोऽप्यस्ति गरीयो मे वाञ्छितं नाम । यदिदानीमनुपधिदयामृतक्लिन्नान्तःकरणया भवत्या

आनीताः किल सौम्यतापदममी निष्कारणद्वेषिणः
प्रेयस्यां मयि मन्दमारुतमुखा हन्तांह्रिरन्तोऽनलम् ।
स्नेहादात्मसुखानपेक्षमधुना कृत्वेदृशं प्रश्रमं
सा तन्वी हृदयाहिता मम पुनः क्रोडं समारोपिता ॥१४६॥

तथापीदमस्तु भरतवाक्यं

भूपालाः परिपालयन्तु धरणीं निर्बाधगोभूसुरां
काले वारिधरा भवन्तु जलदा लीना भवन्त्वीतयः ।
किंचाशेषजगज्जनेष्टघटनारम्भाय संभाव्यता-
मुत्फुल्लाम्बुजगर्भकान्तिसदृशं गौरीकटाक्षाञ्चलम् ॥ १४७ ॥

इति निष्क्रान्तः ।

## ॥ इति पञ्चायुधप्रपञ्चो नाम भाणः संपूर्णः ॥

स्मरकृतरवारिक्रूरधारानुकारी
तरुणहरिणनेत्रालोचनानां विलासः ।
कलयति हृदि येषामुच्चकैः स्वप्रभुत्वं
प्रभवति भुवि तेषामेष हर्षाय भाणः ॥
त्रिविक्रमकृतामेतां शीतांशुसहजासखः ।
त्रिविक्रमः कृतिं पायादपायादघसंभवात् ॥
क्षितिनयनाचलशशिमितशकवर्षे ( १७२७ ) क्रोधनाभिधे शके
मासः सिताद्वितीयासुरगुरुदिन एष पूर्णतां भाणः ॥
जयति धनपुण्डनापश्चरणसरोजानतास्विलाशापः ।
पुरहरपुण्यविवर्तस्त्रिविक्रमाघौघजन्तुमन्त्रस्त्वः ॥